त्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ २ ॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवःस्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ३ ॥ अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥ ४ ॥ अथैनमुद्यच्छत्यामꣳस्यामꣳहि ते महि स हि राजेशानोऽधिपतिः स माꣳ राजेशानोऽधिपतिं करोत्विति ॥५॥ अथैनमाचामति तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । भूः स्वाहा । भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । भुवः स्वाहा । धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाँ२ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । स्वः स्वाहेति । सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदꣳ सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति ॥६॥ तꣳ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥ एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥ एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥ एतमु हैव जानकिरायस्थूणः सत्य-

कामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चे-ज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥ एतमु हैव सत्यकामो जाबा-लोऽन्तेवासिभ्य उक्त्वोवाचापि य एनँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ १२ ॥ चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्यां उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रिय-ङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान्दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ॥ १३ ॥

इति षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥ स ह प्रजा-पतिरीक्षांचक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियँ ससृजे ताँ सृष्ट्वाऽध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपा-रयत्तेनैनामभ्यसृजत् ॥ २ ॥ तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासाँ स्त्री-णाँ सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥ एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै-तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इद-मविद्वाँसोऽधोपहासं चरन्तीति बहु वा इदँ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥ तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सी-द्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुन-र्भगः । पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥ अथ यद्युदक आत्मानं पश्येत्तदभिम-न्त्रयेत मयि तेज इन्द्रियं यशो द्रविणँ सुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥ ६ ॥ सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात् सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥ ७ ॥ सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति

यशस्विनावेव भवतः ॥ ८ ॥ स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्संभवसि हृदयादधिजायसे । स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति ॥ ९ ॥ अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥ १० ॥ अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥ अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाऽक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूꣳस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशापराकाशौ त आददेऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥ १२ ॥ अथ यस्य जायामार्तवं विन्देत्त्र्यहं कꣳसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥ स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥ अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १५ ॥ अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥ अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १७ ॥ अथ य इच्छेत्पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति माꣳसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वार्षभेण वा ॥ १८॥ अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सं जायां पत्या सहेति ॥ १९॥ अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वꣳ सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं

द्यौरहं पृथिवी त्वं तावेहि सꣳरभावहै सह रेतो दधावहै पुꣳसे पुत्राय वित्तय इति ॥ २० ॥ अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥२१॥ हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ । तं ते गर्भं हवामहे दशमे मासि सूतये । यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥ सोष्यन्तीमद्भिरभ्युक्षति, यथा वायुः पुष्करिणीꣳ समिङ्गयति सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा । इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः । तमिन्द्र निर्जहि गर्भेण सावराꣳ सहेति ॥ २३ ॥ जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यꣳ संनीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसंद्यां मा च्छैत्सीत् प्रजया च पशुभिश्च स्वाहा । मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा । यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳ सुहुतं करोतु नः स्वाहेति ॥ २४ ॥ अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतꣳ संनीयानन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥ अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥ अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥ २७ ॥ अथास्य मातरमभिमन्त्रयते, इलाऽसि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥

इति षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

अथ वꣳशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रा-

त्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रो वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूँषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥ समानमा सांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ४ ॥

इति षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

॥ इति बृहदारण्यकोपनिषत्समाप्ता ॥ १० ॥

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ॥ तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

---

## श्वेताश्वतरोपनिषत् ॥ ११ ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ब्रह्मवादिनो वदन्ति ॥ किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः । अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥ १ ॥ कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्या ।

संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ॥ २ ॥ ते ध्यान-योगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥ ३ ॥ तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः । अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥ ४ ॥ पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् । पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥ ५ ॥ सर्वाजीवे सर्वसंस्थे बृहन्ते अस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥ उद्गीतमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाऽक्षरं च । अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ ७ ॥ संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ८ ॥ ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता । अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥ ९ ॥ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ १० ॥ ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥ ११ ॥ एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित् । भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥ वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः । स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ १४ ॥ तिलेषु तैलं दधिनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः । एवमात्मात्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ १५ ॥ सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् । आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परं तद्ब्रह्मोपनिषत्परमिति ॥ १६ ॥

इति श्वेताश्वतरोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ॥ २ ॥

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥ युक्तेन मनसा वयं देवस्य सवितुः सवे । सुवर्गेयाय शक्त्या ॥ २ ॥ युक्त्वाय मनसा देवान्सुवर्यतो धिया दिवम् । बृहज्ज्योतिः

करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥ युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः । शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ५ ॥ अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते । सोमो यत्रातिरिच्यते तत्र संजायते मनः ॥ ६ ॥ सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यम् । तत्र योनिं कृणवसे न हि ते पूर्तमक्षिपत् ॥ ७ ॥ त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य । ब्रह्मोडुपेन प्रतरेत विद्वान्स्रोतांसि सर्वाणि भयावहानि ॥ ८ ॥ प्राणान्प्रपीड्येह संयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत । दुष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो धारयेताप्रमत्तः ॥ ९ ॥ समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥ १० ॥ नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशीनाम् । एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ११ ॥ पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥ १२ ॥ लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवं च । गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥ यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्तम् । तद्वात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥१४॥ यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १५ ॥ एष ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ्जनांस्तिष्ठति सर्वतोमुखः ॥ १६ ॥ यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश । य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥

इति श्वेताश्वतरोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

य एको जालवानीशत ईशनीभिः सर्वांल्लोकानीशत ईशनीभिः । य एवैक उद्भवे संभवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥ एको हि रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशनीभिः । प्रत्यङ्जनांस्तिष्ठति संचु-

कोपान्तकाले संसृज्य विश्वा भुवनानि गोपाः ॥ २ ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ३ ॥ यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तनुवा शंतमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥ यामिषुं गिरिशंत हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥ ६ ॥ ततः परं ब्रह्मपरं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति ॥७॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥ यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९ ॥ ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १० ॥ सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः ॥ ११ ॥ महान्प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः । सुनिर्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः ॥ १२ ॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । हृदा मन्वीशो मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १४ ॥ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १५ ॥ सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १६ ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ॥ १७ ॥ नवद्वारे पुरे देही हꣳसो लेलायते बहिः । वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ १८ ॥ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ १९ ॥ अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ २० ॥ वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् । जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥ २१ ॥

इति श्वेताश्वतरोपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

य एकोऽवर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति । वि चैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥ १ ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः ॥ २ ॥ त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥ ३ ॥ नीलः पतङ्गो हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः । अनादिमत्त्वं विभुत्वेन वर्तसे यतो जातानि भुवनानि विश्वा ॥ ४ ॥ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥५॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ ६ ॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ७ ॥ ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ८ ॥ छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः ॥ ९ ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ १० ॥ यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं स च वि चैति सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥११॥ यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु ॥ १२ ॥ यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १३ ॥ सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ १४ ॥ स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः । यस्मिन्युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ १५ ॥ घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १६ ॥ एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये संनिविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥ यदाऽतमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥ १८ ॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । न तस्य प्रतिमा अस्ति यस्य नाम

महद्यशः ॥ १९ ॥ न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ २० ॥ अजात इत्येवं कश्चिद्भीरुः प्रपद्यते । रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥ २१ ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ २२ ॥

इति श्वेताश्वतरोपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ॥ ५ ॥

द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे । क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ॥ १ ॥ यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ॥२॥ एकैकं जालं बहुधा विकुर्वन्नस्मिन्क्षेत्रे संहरत्येष देवः । भूयः सृष्ट्वा पतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥ सर्वा दिश ऊर्ध्वमधश्च तिर्यक्प्रकाशयन्भ्राजते यद्वनड्वान् । एवं स देवो भगवान्वरेण्यो योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥ यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान्परिणामयेद्यः । सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान्विनियोजयेद्यः ॥ ५ ॥ तद्वेदगुह्योपनिषत्सु गूढं तद्ब्रह्मा वेदते ब्रह्मयोनिम् । ये पूर्वदेवा ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः ॥ ६ ॥ गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता । स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः ॥ ७ ॥ अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः । बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपि दृष्टः ॥ ८ ॥ वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९ ॥ नैव स्त्री न पुमानेष न चैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स रक्ष्यते ॥ १० ॥ संकल्पनस्पर्शनदृष्टिमोहैर्ग्रासांबुवृष्ट्या चात्मविवृद्धिजन्म । कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंप्रपद्यते ॥ ११ ॥ स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति । क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥ अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैकं परिवेष्टितारं

ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥ भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥ १४ ॥

इति श्वेताश्वतरोपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ॥ ६ ॥

स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः । देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥ १ ॥ येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकारो गुणी सर्वविद्यः । तेनेशितं कर्म विवर्तते ह पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यम् ॥ २ ॥ तत्कर्म कृत्वा विनिवर्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् । एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥ ३ ॥ आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान्विनियोजयेद्यः । तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः ॥ ४ ॥ आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः । तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥ ५ ॥ स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयम् । धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम ॥ ६ ॥ तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ ७ ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ८ ॥ न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ९ ॥ यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः स्वभावतो देव एकः स्वमावृणोत् । स नो दधाद्ब्रह्माप्ययम् ॥ १० ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥ एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥१२॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १४ ॥ एको हꣳसो भुवन-

स्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः । तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥ स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकारो गुणी सर्वविद् यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः सꣳसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥ स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता । य ईशे अस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥ १७ ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥ निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परꣳ सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥ तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥ २१ ॥ वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् । नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥ २२ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः प्रकाशन्ते महात्मन इति ॥ २३ ॥

इति श्वेताश्वतरोपनिषत्सु षष्ठोऽध्यायः ॥ ६ ॥

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐशान्तिः शान्तिः शान्तिः ॥

॥ इति कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषत्संपूर्णा ॥

---

## ब्रह्मबिन्दूपनिषत् ॥ १२ ॥

अमृतबिन्दूपनिषद्वेद्यं यत्परमाक्षरम् ।
तदेव हि त्रिपाद्रामचन्द्राख्यं नः परा गतिः ॥

ॐ सह नाववत्विति शान्तिः ॥ ॐ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च । अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ १ ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ २ ॥ यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते । तस्मान्निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३ ॥ निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि । यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥ ४ ॥ तावदेव निरोद्धव्यं यावद्धृदि गतं

क्षयम् । एतज्ज्ञानं च मोक्षं च अतोऽन्यो ग्रन्थविस्तरः ॥ ५ ॥ १ ॥ नैव चिन्त्यं न वाचिन्त्यमचिन्त्यं चिन्त्यमेव च । पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते तदा ॥ ६ ॥ स्वरेण संधयेद्योगमस्वरं भावयेत्परम् । अस्वरेण हि भावेन भावो नाभाव इष्यते ॥ ७ ॥ तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् । तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥ ८ ॥ निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् । अप्रमेयमनाद्यं च ज्ञात्वा च परमं शिवम् ॥ ९ ॥ न निरोधो न चोत्पत्तिर्न वन्धो न च शासनम् । न मुमुक्षा न मुक्तिश्चेदित्येषा परमार्थता ॥ १० ॥ २ ॥ एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु । स्थानत्रयाद्व्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२ ॥ घटसंवृतमाकाशं लीयमाने घटे यथा । घटो लीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ १३ ॥ घटवद्विविधाकारं भिद्यमानं पुनः पुनः । तद्भग्नं न च जानाति स जानाति च नित्यशः ॥ १४ ॥ शब्दमायावृतो यावत्तावत्तिष्ठति पुष्करे । भिन्ने तमसि चैकत्वमेकमेवानुपश्यति ॥ १५ ॥ ३ ॥ शब्दाक्षरं परं ब्रह्म यस्मिन्क्षीणे यदक्षरम् । तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ॥ १६ ॥ द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७ ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्त्वतः । पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥१८॥ गवामनेकवर्णानां क्षीरस्याप्येकवर्णता । क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९ ॥ घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् । सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥ २० ॥ ज्ञाननेत्रं समादाय चरेद्वह्निमतः परम् । निष्कलं निर्मलं शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ २१ ॥ सर्वभूताधिवासं च यद्भूतेषु वसत्यपि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः तदस्म्यहं वासुदेव इति ॥ २२ ॥ ४ ॥ सह नाववत्विति शान्तिः ॥

इत्यथर्ववेदीया ब्रह्मबिन्दूपनिषत्समाप्ता ॥ १२ ॥

---

## कैवल्योपनिषत् ॥ १३ ॥

कैवल्योपनिषद्वेद्यं कैवल्यानन्दतुन्दिलम् ।
कैवल्यगिरिजारामं स्वमात्रं कलयेऽन्वहम् ॥

ॐ सह नाववत्विति शान्तिः ॥

ॐ अथाश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच । अधीहि भगवन्ब्र-

ह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् । यथाऽचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ॥ १ ॥ तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवैहि ॥ २ ॥ न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥ ३ ॥ वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ४ ॥ विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः । अन्त्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥ ५ ॥ हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् । अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥ ६ ॥ तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ७ ॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥ ८ ॥ स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् । ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ९ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥ १० ॥ आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ज्ञाननिर्मथनाभ्यासात्पापं दहति पण्डितः ॥११॥ स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् । स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥ १२ ॥ स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके । सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥ १३ ॥ पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः । पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ॥ आधारमानन्दमखण्डबोधं यस्मिँल्लयं याति पुरत्रयं च ॥ १४ ॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ १५ ॥ यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् । सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ १६ ॥ जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १७ ॥ त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १८ ॥ मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १९ ॥ अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विचित्रम् । पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ॥ २० ॥ अपाणि-

पादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः । अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् ॥ २१ ॥ वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् । न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति ॥ २२ ॥ न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च । एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ॥ २३ ॥

इति कैवल्योपनिषदि प्रथमः खण्डः ॥ १ ॥

समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् । यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आत्मपूतो भवति स सुरापानात्पूतो भवति स ब्रह्महत्यात्पूतो भवति स सुवर्णस्तेयात्पूतो भवति स कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवति अत्याश्रमी सर्वदा सकृद्वा जपेत् ॥ अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते कैवल्यं फलमश्नुत इति ॥ २४ ॥

इति कैवल्योपनिषदि द्वितीयः खण्डः ॥ २ ॥

ॐ सह नाववत्विति शान्तिः ॥

इत्यथर्ववेदीया कैवल्योपनिषत्समाप्ता ॥ १३ ॥

---

# जाबालोपनिषत् ॥ १४ ॥

जाबालोपनिषत्ख्यातं संन्यासज्ञानगोचरम् ।
वस्तुतस्तैपदं ब्रह्म स्वमात्रमवशिष्यते ॥
ॐ भद्रं कर्णेभिरिति शान्तिः ॥

ॐ बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छति तदेव मन्येत तदविमुक्तमेव । इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् ॥ अत्र हि जन्तोः प्राणेपूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति तस्मादविमुक्तमेव निषेवेत अविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवल्क्यः ॥ १ ॥

इति प्रथमः खण्डः ।

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति ॥ स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽन॰

न्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति सर्वानिन्द्रियकृतान्दोषान्वारयतीति तेन वरणा भवति सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नासी भवतीति ॥ कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवतीति ॥ एतद्वै संधिं संध्यां ब्रह्मविद उपासत इति सोऽविमुक्त उपास्य इति । सोऽविमुक्तं ज्ञानमाचष्टे यो वै तदेतदेवं वेदेति ॥ २ ॥

इति जाबालोपनिषत्सु द्वितीयः खण्डः ॥ २ ॥

अथ हैनं ब्रह्मचारिण ऊचुः किं जाप्येनामृतत्वं ब्रूहीति ॥ स होवाच याज्ञवल्क्यः शतरुद्रियेणेत्येतानि ह वा अमृतनामधेयान्येतैर्ह वा अमृतो भवतीति ॥ एवमेवतद्याज्ञवल्क्यः ॥ ३ ॥

इति जाबालोपनिषत्सु तृतीयः खण्डः ॥ ३ ॥

अथ ह जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन् संन्यासमनुब्रूहीति ॥ स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत् ॥ यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा ॥ अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥ तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति ॥ तदु तथा न कुर्यादाग्नेयीमेव कुर्यात् ॥ अग्निर्हि वै प्राणः प्राणमेवैतया करोति पश्चात्त्रैधातवीयामेव कुर्यात् ॥ एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ॥ तं जानन्नग्न आरोहाथा नो वर्धय रयिम् इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् ॥ एष वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वाहेत्येवमेवैतदाह ॥ ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेत् ॥ यद्यग्निं न विन्देदप्सु जुहुयात् ॥ आपो वै सर्वा देवताः । ॐसर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वा समुद्धृत्य प्राश्नीयात्साज्यं हविरनामयं मोक्षमन्त्रस्त्रय्येवं विन्देत् ॥ तद्ब्रह्मैतदुपासितव्यम् ॥ एवमेवैतद्भगवन्निति वै याज्ञवल्क्यः ॥ ४ ॥

इति जाबालोपनिषत्सु चतुर्थः खण्डः ॥ ४ ॥

अथ हैनमत्रिः पप्रच्छ ॥ याज्ञवल्क्य पृच्छामि त्वा याज्ञवल्क्य अयज्ञोपवीती कथं ब्राह्मण इति ॥ स होवाच याज्ञवल्क्य इदमेवास्य तद्यज्ञोपवीतं य आत्मा प्राश्याचम्यायं विधिः परिव्राजकानाम् ॥ वीराध्वाने वाऽनाशके वाऽपां

प्रवेशे वाऽग्निप्रवेशे वा महाप्रस्थाने वाऽथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति ॥ यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत ॥ एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति संन्यासी ब्रह्मविदित्येवमेवैष भगवन्निति वै याज्ञवल्क्यः ॥ ५ ॥

इति जाबालोपनिषत्सु पञ्चमः खण्डः ॥ ५ ॥

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् ॥ यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नाम स परमहंसो नामेति ॥ ६ ॥

इति जाबालोपनिषत्सु षष्ठः खण्डः ॥ ६ ॥

ॐ पूर्णमद इति शान्तिः ॥

इत्यथर्ववेदे जाबालोपनिषत्समाप्ता ॥ १४ ॥

---

## हंसोपनिषत् ॥ १५ ॥

हंसाख्योपनिषत्प्रोक्तनादादिर्यत्र विश्रमेत् ।
तदाधारं निराधारं ब्रह्ममात्रमहं महः ॥

ॐ पूर्णमद इति शान्तिः ॥

ॐ गौतम उवाच । भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद । ब्रह्मविद्याप्रबोधो हि केनोपायेन जायते ॥ १ ॥ सनत्सुजात उवाच । विचार्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः । पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मम ॥ २ ॥ अनाख्येयमिदं गुह्यं योगिनां कोशसंनिभम् । हंसस्य गतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ३ ॥ अथ हंसपरमहंसनिर्णयं व्याख्यास्यामः । ब्रह्मचारिणे शान्ताय दान्ताय गुरुभक्ताय । हंसहंसेति सदाऽयं सर्वेषु देहेषु व्याप्तो वर्तते ॥

यथा ह्यग्निः काष्ठेषु तिलेषु तैलमिव तं विदित्वा न मृत्युमत्येति । गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं गत्वा अनाहतमतिक्रम्य विशुद्धौ प्राणान्निरुध्याज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन्नथो नादमाधाराद्ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसंकाशं स वै ब्रह्म परमात्मेत्युच्यते ॥ १ ॥ अथ हंस ऋषिः, अव्यक्तगायत्री छन्दः । परमहंसो देवता । हमिति बीजम् । स इति शक्तिः । सोऽहमिति कीलकम् । षट्संख्यया अहोरात्रयोरेकविंशतिसहस्राणि षट्शतान्यधिकानि भवन्ति । सूर्याय सोमाय निरञ्जनाय निराभासाय तनुसूक्ष्म प्रचोदयादिति अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यासकरन्यासौ भवतः । एवं कृत्वा हृदयेऽष्टदले हंसात्मानं ध्यायेत् । अग्नीषोमौ पक्षावोंकारः शिरो बिन्दुस्तु नेत्रं मुखं रुद्रो रुद्राणी चरणौ बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः । पश्यत्यनागारश्च शिष्टोभयपार्श्वे भवतः । एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तम् । तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्ये मतिः आग्नेये निद्रालस्यादयो भवन्ति याम्ये क्रूरे मतिः नैर्ऋत्ये पापे मनीषा वारुण्यां क्रीडा वायव्ये गमनादौ बुद्धिः सौम्ये रतिप्रीतिः ईशाने द्रव्यादानं मध्ये वैराग्यं केसरे जाग्रदवस्था कर्णिकायां स्वप्नं लिङ्गे सुषुप्तिः पद्मत्यागे तुरीयं यदा हंसो नादे लीनो भवति तदा तुर्यातीतमुन्मननमजपोपसंहारमित्यभिधीयते । एवं सर्वं हंसवशात्तस्मान्मनो विचार्यते । स एव जपकोट्यां नादमनुभवति एवं सर्वं हंसवशान्नादो दशविधो जायते । चिणीति प्रथमः । चिञ्चिणीति द्वितीयः । घण्टानादस्तृतीयः । शङ्खनादश्चतुर्थम् । पञ्चमस्तन्त्रीनादः । षष्ठस्तालनादः । सप्तमो वेणुनादः । अष्टमो मृदङ्गनादः । नवमो भेरीनादः । दशमो मेघनादः । नवमं परित्यज्य दशममेवाभ्यसेत् । प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम् । तृतीये खेदनं याति चतुर्थे कम्पते शिरः ॥ पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम् । सप्तमे गूढविज्ञानं परा वाचा तथाऽष्टमे ॥ अदृश्यं नवमे देहं दिव्यचक्षुस्तथाऽमलम् । दशमं परमं ब्रह्म भवेद्ब्रह्मात्मसंनिधौ ॥ तस्मिन्मनो विलीयते मनसि संकल्पविकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्तः प्रकाशत इति ॥ ॐ वेदप्रवचनं वेदप्रवचनमिति ॥ २ ॥ ॐ पूर्णमद इति शान्तिः ॥

इत्यथर्ववेदे हंसोपनिषत्समाप्ता ॥ १५ ॥

# आरुणिकोपनिषत् ॥ १६ ॥

आरुणिकाख्योपनिषत्ख्यातसंन्यासिनोऽमलाः ।
यत्प्रबोधाद्यान्ति मुक्तिं तद्रामब्रह्म मे गतिः ॥
ॐ आप्यायन्त्विति शान्तिः ॥

ॐ आरुणिः प्रजापतेर्लोकं जगाम । तं गत्वोवाच । केन भगवन्कर्माण्यशेषतो विसृजानीति । तं होवाच प्रजापतिस्तव पुत्रान्भ्रातॄन्बन्ध्वादीञ्छिखां यज्ञोपवीतं च यागं च सूत्रं च स्वाध्यायं च भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकं चातलपातालवितलसुतलरसातलतलातलमहातलब्रह्माण्डं च विसर्जयेद्दण्डमाच्छादनं चैव कौपीनं च परिग्रहेत् । शेषं विसृजेदिति ॥ १ ॥ गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च स्ववाचाग्नौ समारोपयेदुपवीतं भूमावप्सु वा विसृजेत् । कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत् । पात्रं विसृजेत् । पवित्रं विसृजेत् । दण्डांश्च लौकिकाग्नींश्च विसृजेदिति होवाच । अत ऊर्ध्वममन्त्रवदाचरेत् । ऊर्ध्वगमनं विसृजेत् । त्रिसंध्यादौ स्नानमाचरेत् । संधिं समाधावात्मन्याचरेत् । सर्वेषु वेदेष्वारण्यकमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तयेदिति ॥ २ ॥ खल्वहं ब्रह्म सूत्रं सूचनात्सूत्रं ब्रह्म सूत्रमहमेव विद्वांस्त्रिवृत्सूत्रं त्यजेद्विद्वान्य एवं वेद संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति त्रिः कृत्वाऽभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते । सखा मा गोपायौजः सखायोऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेति । अनेन मन्त्रेण कृतं वैणवं दण्डं कौपीनं परिग्रहेदौषधवदशनमाचरेदौषधवदशनमाचरेत् । ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन हे रक्षतो३ हे रक्षतो३ हे रक्षत इति ॥ ३ ॥ अथातः परमहंसपरिव्राजकानामासनशयनादिकं भूमौ ब्रह्मचारिणां मृत्पात्रं वाऽलाबुपात्रं दारुपात्रं वा कामक्रोधहर्षरोषलोभमोहदम्भदर्पासूयाममत्वाहंकारादीनपि त्यजेत् । वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत् द्वावेव वा चरेद्द्वावेव वा चरेदिति ॥ ४ ॥ खलु वेदार्थं यो विद्वान्सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत् । पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपीह यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदरपात्रं वा । ॐ हि ॐ हि ॐ हीत्येतदुपनिषदं विन्यसेत् ॥ खल्वेतदुपनिषदं विद्वान्य एवं वेद पालाशं बैल्वमौदुम्बरं दण्डमजिनं मेखलां यज्ञोपवीतं च त्यक्त्वा शूरो य एवं वेद । तद्विष्णोः

परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमिति । एवं निर्वाणानुशासनं वेदानुशासनं वेदानुशासनमिति ॥ ५ ॥ ॐ आप्यायन्त्विति शान्तिः ॥

इत्यथर्ववेदीयारुणिकोपनिषत्समाप्ता ॥ १६ ॥

---

## गर्भोपनिषत् ॥ १७ ॥

यद्गर्भोपनिषद्वेद्यं गर्भस्य स्वात्मबोधकम् ।
शरीरापह्नवात्सिद्धं स्वमात्रं कलये हरिम् ॥
ॐ स ह नाववत्विति शान्तिः ॥

ॐ पञ्चात्मकं पञ्चसु वर्तमानं षडाश्रयं षड्गुणयोगयुक्तम् ॥ तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम् ॥ भवति पञ्चात्मकमिति कस्मात्, पृथिव्यापस्तेजोवायुराकाशमित्यस्मिन्पञ्चात्मके शरीरे । का पृथिवी का आपः किं तेजः को वायुः किमाकाशम् । तत्र यत्कठिनं सा पृथिवी यद्द्रवं ता आपो यदुष्णं तत्तेजो यत्संचरति स वायुः यत्सुषिरं तदाकाशमित्युच्यते ॥ तत्र पृथिवी नाम धारणे आपः पिण्डीकरणे तेजः प्रकाशने वायुर्व्यूहने आकाशमवकाशप्रदाने ॥ पृथुस्तु श्रोत्रे शब्दोपलब्धौ त्वक् स्पर्शे चक्षुषी रूपे जिह्वा रसने नासिकाऽऽघ्राणे उपस्थश्चानन्दनेऽपानमुत्सर्गे बुद्ध्या बुध्यति मनसा संकल्पयति वाचा वदति ॥ षडाश्रयमिति कस्मात्, मधुराम्ललवणतिक्तकटुकषायरसान्विन्दते ॥ षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाश्चेति । इष्टानिष्टा शब्दसंज्ञाप्रणिधानाद्दशविधा भवन्ति ॥ १ ॥ शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डुर इति ॥ सप्तधातुकमिति कस्मात्, यथा देवदत्तस्य द्रव्यादिविषया जायन्ते॥ परस्परं सौम्यगुणत्वात्षड्विधो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नाव्नोऽस्थीन्यस्थिभ्यो मज्जा मज्ज्ञः शुक्रं शुक्रशोणितसंयोगादावर्तते गर्भो हृदिव्यवस्थानीति । हृदयेऽन्तराग्निः अग्निस्थाने पित्तं पित्तस्थाने वायुः वायुस्थाने हृदयं प्राजापत्यात्क्रमात् ॥ २ ॥ ऋतुकाले संप्रयोगादेकरात्रोषितं कलिलं भवति सप्तरात्रोषितं बुद्बुदं भवति अर्धमासाभ्यन्तरेण पिण्डो भवति मासाभ्यन्तरेण कठिनो भवति मासद्वयेन शिरः संपद्यते मासत्रयेण पादप्रदेशो भवति ॥ अथ चतुर्थे मासेऽङ्गुल्यजठरकटिप्रदेशो भवति ॥

पञ्चमे मासे पृष्ठवंशो भवति ॥ षष्ठे मासे मुखनासिकाक्षिश्रोत्राणि भवन्ति ॥ सप्तमे मासे जीवेन संयुक्तो भवति ॥ अष्टमे मासे सर्वसंपूर्णो भवति ॥ पितू रेतोऽतिरिक्तात्पुरुषो भवति मातू रेतोऽतिरिक्तात्स्त्रियो भवन्त्युभयोर्बीजतुल्यत्वान्नपुंसको भवति ॥ व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्ति ॥ अन्योन्यवायुपरिपीडितशुक्रद्वध्याद्द्विधा तनूः स्यात्ततो युग्माः प्रजायन्ते ॥ पञ्चात्मकः समर्थः पञ्चात्मिका चेतसा बुद्धिर्गन्धरसादिज्ञाना ध्यानात्क्षरमक्षरं मोक्षं चिन्तयतीति । तदेकाक्षरं ज्ञात्वाऽष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनाम् ॥ अथ मात्राऽशितपीत नाडीसूत्रगतेन प्राण आप्यायते ॥ अथ नवमे मासि सर्वलक्षणसंपूर्णो भवति पूर्वजातीः स्मरति कृताकृतं च कर्म भवति शुभाशुभं च कर्म विन्दति ॥ ३ ॥ नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ॥ आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥ जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः ॥ अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ॥ यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ॥ एकाकी तेन दह्यामि गतास्ते फलभोगिनः ॥ यदि योन्यां प्रमुञ्चामि सांख्यं योगं वा समाश्रये ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्यां प्रमुच्यामि तं प्रपद्ये महेश्वरम् ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्यां प्रमुञ्चामि तं प्रपद्ये भगवन्तं नारायणं देवम् । अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्यां प्रमुञ्चामि ध्याये ब्रह्म सनातनम् ॥ अथ जन्तुः स्त्रीयोनिशतं योनिद्वारि संप्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृश्य तदा न स्मरति जन्ममरणं न च कर्म शुभाशुभम् ॥ ४ ॥ शरीरमिति कस्मात्, साक्षादग्नयो ह्यत्र श्रियन्ते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति ॥ तत्र कोष्ठाग्निर्नामाशितपीतलेह्यचोष्यं पचतीति ॥ दर्शनाग्नी रूपादीनां दर्शनं करोति ॥ ज्ञानाग्निः शुभाशुभं च कर्म विन्दति यस्तत्र ॥ त्रीणि स्थानानि भवन्ति हृदये दक्षिणाग्निरुदरे गार्हपत्यं मुखादाहवनीयात्मा यजमानो बुद्धिः पत्नीं मनो ब्रह्मा निधाय लोभादयः पशवो धृतिर्दीक्षा संतोषश्च बुद्धीन्द्रियाणि यज्ञपात्राणि कर्मेन्द्रियाणि हवींषि शिरः कपालं केशा दर्भा मुखमन्तर्वेदिः, चतुष्कपालं शिरः षोडश पार्श्वदन्तोष्ठपटलानि सप्तोत्तरं मर्मशतं साशीतिकं संधिशतं सनवकं स्नायुशतं सप्त शिराशतानि पञ्च मज्जाशतानि अस्थीनि च ह वै त्रीणि शतानि षष्टिश्चार्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादश पलानि जिह्वा पित्तप्रस्थं

कफस्याढकं शुक्लं कुडवं मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात् । पैप्पलादं मोक्षशास्त्रं परिसमाप्तं पैप्पलादं मोक्षशास्त्रं परिसमाप्तमिति ॥ ५ ॥

ॐ स ह नाववत्विति शान्तिः ।

इति गर्भोपनिषत्समाप्ता ॥ १७ ॥

---

# नारायणाथर्वशिरउपनिषत् ॥ १८ ॥

मायातत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम् ।
त्रिपान्नारायणाख्यं तत्कलये स्वात्ममात्रतः ॥

ॐ स ह नाववत्विति शान्तिः ॥

ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति ॥ नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च ॥ खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ नारायणाद्ब्रह्मा जायते ॥ नारायणाद्रुद्रो जायते ॥ नारायणादिन्द्रो जायते ॥ नारायणात्प्रजापतिः प्रजायते ॥ नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि च्छन्दांसि ॥ नारायणादेव समुत्पद्यन्ते ॥ नारायणात्प्रवर्तन्ते ॥ नारायणे प्रलीयन्ते ॥ एतदृग्वेदशिरोऽधीते ॥ १ ॥ अथ नित्यो नारायणः ॥ ब्रह्मा नारायणः ॥ शिवश्च नारायणः ॥ शक्रश्च नारायणः ॥ कालश्च नारायणः ॥ दिशश्च नारायणः ॥ विदिशश्च नारायणः ॥ ऊर्ध्वं च नारायणः ॥ अधश्च नारायणः ॥ अन्तर्बहिश्च नारायणः ॥ नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥ निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति ॥ य एतद्यजुर्वेदशिरोऽधीते ॥ २ ॥ ओमित्यग्रे व्याहरेत् ॥ नम इति पश्चात् ॥ नारायणायेत्युपरिष्टात् ॥ ओमित्येकाक्षरम् ॥ नम इति द्वे अक्षरे ॥ नारायणायेति पञ्चाक्षराणि ॥ एतद्वै नारायणस्याष्टाक्षरं पदम् ॥ यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनपब्रुवः सर्वमायुरेति ॥ विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति ॥ एतत्सामवेदशिरोऽधीते ॥ ३ ॥ प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् ॥ अकार उकारो मकार इति ॥ तां अनेकधा समभवत्तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥ ॐ नमो नारायणायेति मंत्रोपासको वैकुण्ठभुवनं गमिष्यति ॥ तदिदं पुण्डरीकं विज्ञानघनं ॥ तस्मात्तडिदाभमात्रम् ॥ ब्रह्मण्यो देवकीपुत्रो

ब्रह्मण्यो मधुसूदनः ॥ ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युत इति ॥ सर्वभूतस्थमेकं वै नारायणं कारणपुरुषमकारणं परं ब्रह्म ओम् ॥ एतदथर्वशिरो योऽधीते ॥ ४ ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ तत्सायंप्रातरधीयानोऽपापो भवति ॥ मध्यंदिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते ॥ सर्ववेदपारायणपुण्यं लभते ॥ नारायणसायुज्यमवाप्नोति ॥ श्रीमन्नारायणसायुज्यमवाप्नोति य एवं वेद ॥ ५ ॥

ॐ स ह नाववत्विति शान्तिः ॥

॥ इति नारायणाथर्वशिरउपनिषत्समाप्ता ॥ १८ ॥

---

## महानारायणोपनिषत् ॥ १९ ॥

ॐ नमो महते नारायणाय ॥ अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् । शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ॥ १ ॥ यस्मिन्निदं सं च वि चैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः । तदेव भूतं तदु भव्यमानमिदं तदक्षरे परमे व्योमन् ॥ २ ॥ येनावृतं खं च दिवं मही च येनादित्यस्तपति तेजसा भ्राजसा च । यदन्तः समुद्रे कवयो वदन्ति तदक्षरे परमे प्रजाः ॥ ३ ॥ यतः प्रसूता जगतः प्रसूती तोयेन जीवान्विससर्ज भूम्याम् । यत ओषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणि ॥ ४ ॥ अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम् । यदेकम व्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥ ५ ॥ तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् । इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥ ६ ॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥ ७ ॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥ ८ ॥ अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम् । स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः ॥ ९ ॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् । न तस्येशे कश्चन तस्य नाम महद्यशः ॥ १० ॥ न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ ११ ॥ अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ ॥ १२ ॥

इति श्रीमहानारायणोपनिषदि प्रथमः खण्डः ॥ १ ॥

एष हि देवः प्र दिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखस्तिष्ठति सर्वतोमुखः ॥ १ ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ २ ॥ वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम् । यस्मिन्निदं सं च वि चैकं स ओतः प्रोतश्च विभुः प्रजासु ॥ ३ ॥ प्र तद्वोचे अमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहासु । त्रीणि पदा निहिता गुहासु यस्तद्वेद स पितुः पितासत् ॥ ४ ॥ स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा । यत्र देवा अमृतत्वमानशानास्तृतीये धामान्यभ्यैरयन्त ॥ ५ ॥ परि द्यावापृथिवी यन्ति सद्यः परि लोकान्परि दिशः परि सुवः । ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्तदभवत्तत्प्रजासु ॥ ६ ॥ परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसम्बभूव ॥ ७ ॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥ ८ ॥ उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम । पशूंश्च मह्यमावह जीवनं च दिशो दिशः ॥ ९ ॥ मा नो हिंसीज्जातवेदो गामश्वं पुरुषं जगत् । अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥ १० ॥

इति श्रीमहानारायणोपनिषदि द्वितीयः खण्डः ॥ २ ॥

तत्पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ १ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २ ॥ तत्पुरुषाय विद्महे नन्दिकेश्वराय धीमहि । तन्नो वृषभः प्रचोदयात् ॥ ३ ॥ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥ ४ ॥ षण्मुखाय विद्महे महासेनाय धीमहि । तन्नः षष्ठः प्रचोदयात् ॥ ५ ॥ पावकाय विद्महे सप्तजिह्वाय धीमहि । तन्नो वैश्वानरः प्रचोदयात् ॥ ६ ॥ वैश्वानराय विद्महे लालेलाय धीमहि । तन्नो अग्निः प्रचोदयात् ॥ ७ ॥ भास्कराय विद्महे दिवाकराय धीमहि । तन्नः सूर्यः प्रचोदयात् ॥ ८ ॥ दिवाकराय विद्महे महाद्युतिकराय धीमहि । तन्न आदित्यः प्रचोदयात् ॥ ९ ॥ आदित्याय विद्महे सहस्रकिरणाय धीमहि । तन्नो भानुः प्रचोदयात् ॥ १० ॥ तीक्ष्णशृंगाय विद्महे वक्रपादाय धीमहि । तन्नो वृषभः प्रचोदयात् ॥ ११ ॥ कात्यायन्यै विद्महे कन्याकुमार्यै धीमहि । तन्नो दुर्गा प्रचोदयात् ॥ १२ ॥ महाशूलिन्यै विद्महे महादुर्गायै धीमहि । तन्नो भगवती प्रचोदयात् ॥ १३ ॥ सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयात् ॥ १४ ॥

तत्पुरुषाय विद्महे सुपर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् ॥ १५ ॥
नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ १६ ॥
नृसिंहाय विद्महे वज्रनखाय धीमहि । तन्नः सिंहः प्रचोदयात् ॥ १७ ॥
चतुर्मुखाय विद्महे कमण्डलुधराय धीमहि । तन्नो ब्रह्मा प्रचोदयात् ॥ १८ ॥

इति श्रीमहानारायणोपनिषदि तृतीयः खण्डः ॥ ३ ॥

सहस्रपरमा देवी शतमूला शतांकुरा । सर्वं हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी ॥ १ ॥ दूर्वा अमृतसम्भूताः शतमूलाः शतांकुराः । शतं मे घ्नन्ति पापानि शतमायुर्विवर्धति ॥ २ ॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ ३ ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे। शिरसा धारिता देवि रक्षस्व मां पदे पदे ॥ ४ ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना। भूमिर्धेनुर्धरित्री च धरणी लोकधारिणी । तेन या ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ॥ ५ ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् । त्वया हतेन पापेन जीवामि शरदः शतम् ॥ ६ ॥ वाचा कृतं कर्मकृतं मनसा दुर्विचिन्तितम् । त्वया हतेन पापेन गच्छामि परमां गतिम् । मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ ७ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ८ ॥ ॐ भूर्लक्ष्मीर्भुवर्लक्ष्मीः सुवः कालकर्णी तन्नो महालक्ष्मीः प्रचोदयात् ॥ ९ ॥ पद्मप्रभे पद्मसुन्दरि धर्मरतये स्वाहा ॥ १० ॥ हिरण्यशृंगं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥ ११ ॥ यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् । तन्मे इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥ १२ ॥ सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ १३ ॥

इति श्रीमहानारायणोपनिषदि चतुर्थः खण्डः ॥ ४ ॥

नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः ॥ यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् ॥ १ ॥ अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् । तन्मे वरुणो राजा पाणिना ह्यवमर्शतु ॥ २ ॥ सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः । नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम् ॥ ३ ॥ इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ४ ॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ ५ ॥ समुद्रादर्णवादधि

# संन्यासोपनिषत् ॥ ६८ ॥

संन्यासोपनिषद्वेद्यं संन्यासिपटलाश्रयम् ।
सत्तासामान्यविभवं स्वमात्रमिति भावये ॥ १ ॥
ॐ आप्यायन्त्विति शान्तिः ॥

हरिः ॐ अथातः संन्यासोपनिषदं व्याख्यास्यामः । योऽनुक्रमेण संन्यस्यति स संन्यस्तो भवति । कोऽयं संन्यास उच्यते कथं वा संन्यस्तो भवति । य आत्मानं क्रियाभिर्गुप्तं करोति मातरं पितरं भार्यां पुत्रान्बन्धूननुमोदयित्वा ये चास्यर्त्विजस्तान्सर्वांश्च पूर्ववद्वृणित्वा वैश्वानरेष्टिं निर्वपेत्सर्वस्वं दद्याद्यजमानस्य गा ऋत्विजः सर्वैः पात्रैः समारोप्य यदाहवनीये गार्हपत्ये वाऽन्वाहार्यपचने सभ्यावसथ्ययोश्च प्राणापानव्यानोदानसमानान्सर्वान्सर्वेषु समारोपयेत् । सशिखान्केशान्विसृज्य यज्ञोपवीतं छित्त्वा पुत्रं दृष्ट्वा त्वं यज्ञस्त्वं सर्वमित्यनुमन्त्रयेत् । यद्यपुत्रो भवत्यात्मानमेवेमं ध्यात्वाऽनवेक्षमाणः प्राचीमुदीचीं वा दिशं प्रव्रजेच्च । त्रिषु वर्णेषु भिक्षाचर्यं चरेत् । पाणिपात्रेणाशनं कुर्यात् । औषधवदशनमाचरेत् । औषधवदशनं प्राश्नीयात् । यथालाभमश्नीयात्प्राणसंधारणार्थं यथा मेदोवृद्धिर्न जायते । कृशो भूत्वा ग्राम एकरात्रं नगरे पञ्चरात्रं चतुरो मासान्वार्षिकान्ग्रामे वा नगरे वापि वसेत् । पक्षा वै मासा इति द्वौ मासौ वा वसेत् । विशीर्णवस्त्रं वल्कलं वा प्रतिगृह्णीयान्नान्यत्प्रतिगृह्णीयाद्यद्यशक्तो भवति क्लेशतस्तप्यते तप इति । यो वा एवं क्रमेण संन्यस्यति यो वा एवं पश्यति किमस्य यज्ञोपवीतं काऽस्य शिखा कथं वाऽस्योपस्पर्शनमिति । तं होवाचेदमेवास्य तद्यज्ञोपवीतं यदात्मध्यानं विद्या शिखा नीरैः सर्वत्रावस्थितैः कार्यं निर्वर्तयन्नुदरपात्रेण जलतीरे निकेतनम् । ब्रह्मवादिनो वदन्त्यस्तमित आदित्ये कथं वाऽस्योपस्पर्शनमिति । तान्होवाच यथाऽहनि तथा रात्रौ नास्य नक्तं न दिवा तदप्येतदृषिणोक्तम् । सकृद्दिवा हैवास्मै भवति य एवं विद्वानेतेनात्मानं संधत्ते ॥ १ ॥

इति संन्यासोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

ॐ चत्वारिंशत्संस्कारसंपन्नः सर्वतो विरक्तश्चित्तशुद्धिमेत्याशासूयेर्ष्याहंकारं दग्ध्वा साधनचतुष्टयसंपन्न एव संन्यस्तुमर्हति । संन्यासं निश्चयं कृत्वा

पुनर्न च करोति यः । स कुर्यात्कृच्छ्रमात्रं तु पुनः संन्यस्तुमर्हति ॥ १ ॥ संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः । संन्यासविघ्नकर्ता च त्रीनेतान् पतितान्विदुः ॥ २ ॥ इति ॥ अथ षण्ढः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी कुष्ठी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको नास्तिको वैराग्यवन्तोऽप्येते न संन्यासार्हाः । संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः ॥ आरूढपतितापत्यः कुनखी श्यावदन्तकः । क्षीवस्तथाऽङ्गविकलो नैव संन्यस्तुमर्हति ॥ ३ ॥ संप्रत्यवसितानां च महापातकिनां तथा । व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत् ॥ ४ ॥ व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम् । सत्यशौचपरिभ्रष्टं संन्यासं नैव कारयेत् ॥ ५ ॥ एते नार्हन्ति संन्यासमातुरेण विना क्रमम् । ॐ भूः स्वाहेति शिखामुत्पाट्य यज्ञोपवीतं बहिर्न निवसेत् । यशो बलं ज्ञानं वैराग्यं मेधां प्रयच्छेति यज्ञोपवीतं छित्त्वा ॐ भूः स्वाहेत्यप्सु वस्त्रं कटिसूत्रं च विसृज्य संन्यस्तं मयेति त्रिवारमभिमन्त्रयेत् । संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः । एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति ॥ ६ ॥ षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च । कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥७॥ ये च संतानजा दोषा ये दोषा देहसंभवाः । प्रैषाग्निर्निर्दहेत्सर्वांस्तुषाग्निरिव काञ्चनम् ॥ ८ ॥ सखा मा गोपायेति दण्डं परिग्रहेत् । दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम् । पुण्यस्थलसमुत्पन्नं नानाकल्मषशोधितम् ॥ ९ ॥ अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम् । नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा बिभृयाद्यतिः ॥ १० ॥ दण्डात्मनोस्तु संयोगः सर्वथा तु विधीयते । न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥ ११ ॥ जगज्जीवनं जीवनाधारभूतं माते मामन्त्रयस्व सर्वसौम्येति कमण्डलुं परिगृह्य योगपट्टाभिषिक्तो भूत्वा यथासुखं विहरेत् ॥ त्यज धर्ममधर्मं च उभे सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ १२ ॥ वैराग्यसंन्यासी ज्ञानसंन्यासी ज्ञानवैराग्यसंन्यासी कर्मसंन्यासीति चातुर्विध्यमुपागतः । तद्यथेति दृष्टानुश्रविकविषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मविशेषात्संन्यस्तः स वैराग्यसंन्यासी । शास्त्रज्ञानात्पापपुण्यलोकानुभवश्रवणात्प्रपञ्चोपरतो देहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनान्नमिव प्रवृत्तिं सर्वं हेयं मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति स

एव ज्ञानसंन्यासी । क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन देहमात्रावशिष्टः संन्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसंन्यासी । ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति स कर्मसंन्यासी । स संन्यासः षड्विधो भवति–कुटीचकबहूदकहंसपरमहंसतुरीयातीतावधूताश्चेति । कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनशाटीकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः । बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याष्टकवलाशी । हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्डतुण्डधारी । परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेषु करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी तुरीयातीतो गोमुखवृत्त्या फलाहारी अन्नाहारी चेद्गृहत्रये देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः । अवधूतस्त्वनियमः पतिताभिशस्तवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याऽऽहारपरः स्वरूपानुसंधानपरः । जगत्तावदिदं नाहं सवृक्षतृणपर्वतम् । यद्बाह्यं जडमत्यन्तं तत्स्यां कथमहं विभुः ॥ १३ ॥ कालेनाल्पेन विलयी देहो नाहमचेतनः । जडया कर्णशष्कुल्या कल्पमानक्षणस्थया ॥ १४ ॥ शून्याकृतिः शून्यभवः शब्दो नाहमचेतनः । त्वचा क्षणविनाशिन्या प्राप्योऽप्राप्योऽयमन्यथा ॥ १५ ॥ चित्प्रसादोपलब्धात्मा स्पर्शो नाहमचेतनः । लब्धात्मा जिह्वया तुच्छो लोलया लोलसत्तया ॥ १६ ॥ स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहमचेतनः । दृश्यदर्शनयोर्लीनं क्षयिक्षणविनाशिनोः ॥ १७ ॥ केवले द्रष्टरि क्षीणं रूपं नाहमचेतनम् । नासया गन्धजडया क्षयिण्या परिकल्पितः ॥ १८ ॥ पेलवो नियताकारो गन्धो नाहमचेतनः । निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ॥ १९ ॥ शुद्धचेतन एवाहं कलाकलनवर्जितः । चैत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ॥ २० ॥ सबाह्याभ्यन्तरव्यापी निष्कलोऽहं निरञ्जनः । निर्विकल्पचिदाभास एक आत्माऽस्मि सर्वगः ॥ २१ ॥ मयैव चेतनेनेमे सर्वे घटपटादयः । सूर्यान्ता अवभास्यन्ते दीपेनेवात्मतेजसा ॥ २२ ॥ मयैवैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः । तेजसाऽन्तःप्रकाशेन यथाऽग्निकणपङ्क्तयः ॥२३॥ अनन्तानन्दसंभोगा

परोपशमशालिनी । शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥ २४ ॥ सर्वभावान्तरस्थाय चैत्यमुक्तचिदात्मने । प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥ २५ ॥ विचित्राः शक्तयः स्वच्छाः समा या निर्विकारया । चिता क्रियन्ते समया कलाकलनमुक्तया ॥ २६ ॥ कालत्रयमुपेक्षित्र्या हीनाया-श्चैत्यबन्धनैः । चितश्चैत्यमुपेक्षित्र्याः समतैवावशिष्यते ॥ २७ ॥ सा हि वाचा-मगम्यत्वादसत्तामिव शाश्वतीम् । नैरात्मसिद्धात्मदशामुपयातैव शिष्यते ॥ २८ ॥ ईहानीहामयैरन्तर्या चिदावलिता मलैः । सा चिन्नोत्पादितुं शक्ता पाशबद्धेव पक्षिणी ॥ २९ ॥ इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः । धरा-विवरमग्नानां कीटानां समतां गताः ॥ ३० ॥ आत्मनेऽस्तु नमो मह्यमवि-च्छिन्नचिदात्मने । परामृष्टोऽस्मि लब्धोऽस्मि प्रोदितोऽस्म्यचिरादहम् । उद्धृतोऽस्मि विकल्पेभ्यो योऽस्मि सोऽस्मि नमोऽस्तु ते ॥ ३१ ॥ तुभ्यं मह्य-मनन्ताय मह्यं तुभ्यं चिदात्मने । नमस्तुभ्यं परेशाय नमो मह्यं शिवाय च ॥ ३२ ॥ तिष्ठन्नपि हि नासीनो गच्छन्नपि न गच्छति । शान्तोऽपि व्यवहार-स्थः कुर्वन्नपि न लिप्यते ॥ ३३ ॥ सुलभश्चायमत्यन्तं सुज्ञेयश्चाप्तबन्धुवत् । शरीरपद्मकुहरे सर्वेषामेव षट्पदः ॥ ३४ ॥ न मे भोगस्थितौ वाञ्छा न मे भोगविसर्जने । यदायाति तदायातु यत्प्रयाति प्रयातु तत् ॥ ३५ ॥ मनसा मनसि च्छिन्ने निरहंकारतां गते । भावेन गलिते भावे स्वस्थस्तिष्ठामि केवलः ॥ ३६ ॥ निर्भावं निरहंकारं निर्मनस्कमनीहितम् । केवलास्पन्दशुद्धात्मन्येव तिष्ठति मे रिपुः ॥ ३७ ॥ तृष्णारज्जुगणं छित्त्वा मच्छरीरकपञ्जरात् । न जाने क्व गतोड्डीय निरहंकारपक्षिणी ॥ ३८ ॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । यः समः सर्वभूतेषु जीवितं तस्य शोभते ॥ ३९ ॥ योऽन्तः-शीतलया बुद्ध्या रागद्वेषविमुक्तया । साक्षिवत्पश्यतीदं हि जीवितं तस्य शोभते ॥ ४० ॥ येन सम्यक्परिज्ञाय हेयोपादेयमुज्झता । चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥ ४१ ॥ ग्राह्यग्राहकसंबन्धे क्षीणे शान्तिरुदे-त्यलम् । स्थितिमभ्यागता शान्तिर्मोक्षनामाभिधीयते ॥ ४२ ॥ भ्रष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता । हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥ ४३ ॥ पावनी परमोदारा शुद्धसत्त्वानुपातिनी । आत्मध्यानमयी नित्या सुषुप्तिस्थेव तिष्ठति ॥ ४४ ॥ चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते । निर्मनस्कस्वभाव-

त्वाच्च तत्र कलनामलम् ॥ ४५ ॥ सा सत्यता सा शिवता साऽवस्था पारमात्मिकी । सर्वज्ञता सा संतृप्तिर्नतु यत्र मनः क्षतम् ॥ ४६ ॥ प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि । निरस्तमननानन्दः संविन्मात्रपरोऽस्म्यहम् ॥ ४७ ॥ मलं संवेद्यमुत्सृज्य मनो निर्मूलयन्परम् । आशापाशानलं छित्वा संविन्मात्रपरोऽस्म्यहम् ॥४८॥ अशुभाशुभसंकल्पः संशान्तोऽस्मि निरामयः । नष्टेष्टानिष्टकलनः संविन्मात्रपरोऽस्म्यहम् ॥४९ ॥ आत्मतापरते त्यक्त्वा निर्विभागो जगत्स्थितौ । वज्रस्तम्भवदात्मानमवलम्ब्य स्थिरोऽस्म्यहम् ॥ ५० ॥ निर्मलायां निराशायां स्वसंवित्तौ स्थितोऽस्म्यहम् । ईहितानीहितैर्मुक्तो हेयोपादेयवर्जितः ॥ ५१ ॥ कदाऽन्तस्तोषमेष्यामि स्वप्रकाशपदे स्थितः । कदोपशान्तमननो धरणीधरकन्दरे ॥५२॥ समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना । निरंशध्यानविश्रान्तिमूकस्य मम मस्तके ॥ ५३ ॥ कदा तार्णं करिष्यन्ति कुलायं वनपुत्रिकाः । संकल्पपादपं तृष्णालतं छित्वा मनोवनम् ॥ ५४ ॥ विततां भुवमासाद्य विहरामि यथासुखम् । पदं तदनु यातोऽस्मि केवलोऽस्मि जयाम्यहम् ॥ ५५ ॥ निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः । स्वच्छतोर्जितता सत्ता हृद्यता सत्यता ज्ञता ॥ ५६ ॥ आनन्दितोपशमता सदा प्रमुदितोदिता । पूर्णतोदारता सत्या कान्तिसत्ता सदैकता ॥ ५७ ॥ इत्येवं चिन्तयन्भिक्षुः स्वरूपस्थितिमञ्जसा । निर्विकल्पस्वरूपज्ञो निर्विकल्पो बभूव ह ॥ ५८ ॥ आतुरो जीवति चेत्क्रमसंन्यासः कर्तव्यः । न शूद्रस्त्रीपतितोदक्या संभाषणम् । न यतेर्देवपूजनोत्सवदर्शनम् । तस्मान्न संन्यासिन एष लोकः । आतुरकुटीचकयोर्भूलोकभुवर्लोकौ । बहूदकस्य स्वर्गलोकः । हंसस्य तपोलोकः । परमहंसस्य सत्यलोकः । तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसंधानेन भ्रमरकीटन्यायवत् । स्वरूपानुसंधानव्यतिरिक्तान्यशास्त्राभ्यास उष्ट्रकुङ्कुमभारवद्व्यर्थः । न योगशास्त्रप्रवृत्तिः । न सांख्यशास्त्राभ्यासः । न मन्त्रतन्त्रव्यापारः । नेतरशास्त्रप्रवृत्तिर्यतेरस्ति । अस्ति चेच्छवालंकारवत्कर्माचारविद्यादूरः । न परिव्राण्नामसंकीर्तनपरो यद्यत्कर्म करोति तत्तत्फलमनुभवति । एरण्डतैलफेनवत्सर्वं परित्यजेत् । न देवताप्रसादग्रहणम् । न बाह्यदेवाभ्यर्चनं कुर्यात् । स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्या-

ऽऽहारमाहरन्कृशी भूत्वा मेदोवृद्धिमकुर्वन्विहरेत् । माधुकरेण करपात्रेणान्यपात्रेण वा कालं नयेत् । आत्मसंमितमाहारमाहरेदात्मवान्यतिः । आहारस्य च भागौ द्वौ तृतीयमुदकस्य च । वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥५९॥ भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेत्कचित् । निरीक्षन्ते त्वनुद्विग्नास्तद्गृहं यत्नतो व्रजेत् ॥ ६०॥ पञ्च सप्त गृहाणां तु भिक्षामिच्छेत्क्रियावताम् । गोदोहमात्रमाकाङ्क्षन्निष्क्रान्तो न पुनर्व्रजेत् ॥ ६१ ॥ नक्ताद्वरश्चोपवास उपवासादयाचितः । अयाचिताद्वरं भैक्षं तस्माद्भैक्षेण वर्तयेत् ॥ ६२ ॥ नैव सव्यापसव्येन भिक्षाकाले विशेद्गृहान् । नातिक्रामेद्गृहं मोहाद्यत्र दोषो न विद्यते ॥ ६३ ॥ श्रोत्रियान्नं न भिक्षेत श्रद्धाभक्तिबहिष्कृतम् । व्रात्यस्यापि गृहे भिक्षेच्छ्रद्धाभक्तिपुरस्कृते ॥ ६४ ॥ माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् । तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ॥ ६५ ॥ मनःसंकल्परहितांस्त्रीन्गृहान्पञ्च सप्त वा । मधुमक्षिकवत्कृत्वा माधूकरमिति स्मृतम् ॥ ६६ ॥ प्रातःकाले च पूर्वेद्युर्यद्भक्तैः प्रार्थितं मुहुः । तद्भैक्षं प्राक्प्रणीतं स्यात्स्थितिं कुर्यात्तथापि वा ॥ ६७ ॥ भिक्षाटनसमुद्योगाद्येन केन निमन्त्रितम् । अयाचितं तु तद्भैक्षं भोक्तव्यं च मुमुक्षुभिः ॥ ६८ ॥ उपस्थानेन यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन तत् । तात्कालिकमिति ख्यातं भोक्तव्यं यतिभिः सदा ॥ ६९ ॥ सिद्धमन्नं यदानीतं ब्राह्मणेन मठं प्रति । उपपन्नमिति प्राहुर्मुनयो मोक्षकाङ्क्षिणः ॥ ७० ॥ चरेन्माधूकरं भैक्षं यतिर्म्लेच्छकुलादपि । एकान्नं नतु भुञ्जीत बृहस्पतिसमादपि । याचिताऽयाचिताभ्यां च भिक्षाभ्यां कल्पयेत्स्थितम् ॥ ७१ ॥ न वायुः स्पर्शदोषेण नाग्निर्दहनकर्मणा । नापो मूत्रपुरीषाभ्यां नान्नदोषेण मस्करी ॥ ७२ ॥ विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने । कालेऽपराह्णे भूयिष्ठे भिक्षाचरणमाचरेत् ॥ ७३ ॥ अभिशस्तं च पतितं पाषण्डं देवपूजकम् । वर्जयित्वा चरेद्भैक्षं सर्ववर्णेषु चापदि ॥७४॥ घृतं श्वमूत्रसदृशं मधु स्यात्सुरया समम् । तैलं सूकरमूत्रं स्यात्सूपं लशुनसंमितम् ॥७५॥ माषापूपादि गोमांसं क्षीरं मूत्रसमं भवेत् । तस्मात्सर्वप्रयत्नेन घृतादीन्वर्जयेद्यतिः । घृतसूपादिसंयुक्तमन्नं नाद्यात्कदाचन ॥ ७६ ॥ पात्रमस्य भवेत्पाणिस्तेन नित्यं स्थितिं नयेत् । पाणिपात्रश्चरन्योगी नासकृद्भैक्षमाचरेत् ॥ ७७ ॥ आस्येन तु यदाहारं गोवन्मृगयते मुनिः । तदा समः स्यात्सर्वेषु सोऽमृतत्वाय कल्पते ॥ ७८ ॥ आज्यं रुधिरमिव त्यजेदेकत्रान्नं पललमिव गन्धलेपनमशुद्धलेपनमिव क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपात्र-

मिवाभ्यङ्गं स्त्रीसङ्गमिव मित्राह्लादकं मूत्रमिव स्पृहां गोमांसमिव ज्ञातचरदेशं चण्डालवाटिकामिव स्त्रियमहिमिव सुवर्णं कालकूटमिव सभास्थलं श्मशानस्थलमिव राजधानीं कुम्भीपाकमिव शवपिण्डवदेकत्रान्नं न देवतार्चनम्। प्रपञ्चवृत्तिं परित्यज्य जीवन्मुक्तो भवेत् ॥ आसनं पात्रलोपश्च संचयः शिष्यसंचयः। दिवास्वापो वृथालापो यतेर्बन्धकराणि षट् ॥७९॥ वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम्। उक्तालाब्वादिपात्राणामेकस्यापीह संग्रहः ॥ ८० ॥ यतेः संव्यवहाराय पात्रलोपः स उच्यते । गृहीतस्य तु दण्डादेर्द्वितीयस्य परिग्रहः ॥ ८१ ॥ कालान्तरोपभोगार्थं संचयः परिकीर्तितः। शुश्रूषालाभपूजार्थं यशोर्थं वा परिग्रहः ॥ ८२ ॥ शिष्याणां नतु कारुण्याच्छिष्यसंग्रह ईरितः। विद्या दिवा प्रकाशत्वादविद्या रात्रिरुच्यते ॥ ८३ ॥ विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते। आध्यात्मिकीं कथां मुक्त्वा भिक्षावार्तां विना तथा ॥ ८४ ॥ अनुग्रहं परिप्रश्नं वृथाजल्पोऽन्य उच्यते। एकान्नं मदमात्सर्यं गन्धपुष्पविभूषणम् ॥ ८५ ॥ ताम्बूलाभ्यञ्जने क्रीडा भोगाकाङ्क्षा रसायनम्। कत्थनं कुत्सनं स्वस्ति ज्योतिश्च क्रयविक्रयम् ॥ ८६ ॥ क्रियाकर्म विवादश्च गुरुवाक्यविलङ्घनम्। संधिश्च विग्रहो यानं मञ्चकं शुक्लवस्त्रकम् ॥ ८७ ॥ शुक्लोत्सर्गो दिवास्वापो भिक्षाधारस्तु तैजसम्। विषं चैवायुधं बीजं हिंसां तैक्ष्ण्यं च मैथुनम् ॥ ८८ ॥ त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम्। गोत्रादिचरणं सर्वं पितृमातृकुलं धनम्। प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ॥ ८९ ॥ सुजीर्णोऽपि सुजीर्णासु विद्वांस्त्रीषु न विश्वसेत्। सुजीर्णास्वपि कन्थासु सजते जीर्णमम्बरम् ॥ ९० ॥ स्थावरं जङ्गमं बीजं तैजसं विषमायुधम्। षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥ ९१ ॥ नैवाददीत पाथेयं यतिः किंचिदनापदि। पक्कमापत्सु गृह्णीयाद्यावदन्नं न लभ्यते ॥ ९२ ॥ नीरुजश्च युवा चैव भिक्षुर्नावसथे वसेत्। परार्थं न प्रतिग्राह्यं न दद्याच्च कथंचन ॥ ९३ ॥ दैन्यभावात्तु भूतानां सौभगाय यतिश्चरेत् । पक्कं वा यदि वाऽपक्कं याचमानो व्रजेदधः ॥ ९४ ॥ अन्नपानपरो भिक्षुर्वस्त्रादीनां प्रतिग्रही। आविकं वाऽनाविकं वा तथा पट्टपटानपि ॥ ९५ ॥ प्रतिगृह्य यतिश्चैतान्पतत्येव न संशयः। अद्वैतं नावमाश्रित्य जीवन्मुक्तत्वमाप्नुयात् ॥ ९६ ॥

वाग्दण्डे मौनमातिष्ठेत्कायदण्डे त्वभोजनम् । मानसे तु कृते दण्डे प्राणायामो विधीयते ॥ ९७ ॥ कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ९८ ॥ रथ्यायां बहुवस्त्राणि भिक्षा सर्वत्र लभ्यते । भूमिः शय्याऽस्ति विस्तीर्णा यतयः केन दुःखिताः ॥ ९९ ॥ प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः । आत्मन्यग्नीन्समारोप्य सोऽग्निहोत्री महायतिः ॥ १०० ॥ प्रवृत्तिर्द्विविधा प्रोक्ता मार्जारी चैव वानरी । ज्ञानाभ्यासवतामोतुर्वानरीभाक्त्वमेव च ॥ १०१ ॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ १०२ ॥ सर्वेषामेव पापानां सङ्घाते समुपस्थिते । तारं द्वादशसाहस्रमभ्यसेच्छेदनं हि तत् ॥ १०३ ॥ यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् । तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ॥ १०४ ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥

इति संन्यासोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इति संन्यासोपनिषत्समाप्ता ॥ ६८ ॥

---

## परमहंसपरिव्राजकोपनिषत् ॥ ६९ ॥

पारिव्राज्यधर्मवन्तो यज्ज्ञानाद्ब्रह्मतां ययुः ।
तद्ब्रह्म प्रणवैकार्थं तुर्यतुर्यं हरिं भजे ॥
ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ अथ पितामहः स्वपितरमादिनारायणमुपसमेत्य प्रणम्य पप्रच्छ भगवंस्त्वन्मुखाद्वर्णाश्रमधर्मक्रमं सर्वं श्रुतं विदितमवगतम् । इदानीं परमहंसपरिव्राजकलक्षणं वेदितुमिच्छामि—कः परिव्रजनाधिकारी, कीदृशं परिव्राजकलक्षणं, कः परमहंसः, परिव्राजकत्वं कथं, तत्सर्वं मे ब्रूहीति । स होवाच भगवनादिनारायणः । सद्गुरुसमीपे सकलविद्यापरिश्रमज्ञो भूत्वा विद्वान्सर्वमैहिकामुष्मिकसुखश्रमं ज्ञात्वैषणात्रयवासनात्रयममत्वाहंकारादिकं वमनान्नमिव हेयमधिगम्य मोक्षमार्गैकसाधनो ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा ।

अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदिति बुद्ध्वा सर्वसंसारेषु विरक्तो ब्रह्मचारी गृही वानप्रस्थो वा पितरं मातरं कलत्रपुत्रमाप्तबन्धुवर्गं तदभावे शिष्यं सहवासिनं वाऽनुमोदयित्वा तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति तदु तथा न कुर्यात्। आग्नेय्यामेव कुर्यात्। अग्निर्हि प्राणः प्राणमेवैतया करोति त्रैधातवीयामेव कुर्यात्। एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति। अयं ते योनिरृत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आरोहाथानो वर्धया रयिमित्यनेन मन्त्रेणाग्निमाजिघ्रेत्। एष वा अग्नेर्योनिर्यः प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाह। ग्रामाच्छ्रोत्रियागारादग्निमाहृत्य स्वविध्युक्तक्रमेण पूर्ववदग्निमाजिघ्रेत्। यद्यातुरो वाग्निं न विन्देदप्सु जुहुयात्। आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य प्राश्नीयात् साज्यं हविरनामयम्। एष विधिर्वीराध्वाने वाऽनाशके वा संप्रवेशे वाऽग्निप्रवेशे वा महाप्रस्थाने वा। यद्यातुरः स्यान्मनसा वाचा वा संन्यसेदेष पन्थाः। स्वस्थक्रमेणैव चेदात्मश्राद्धं विरजाहोमं कृत्वाऽग्निमात्मन्यारोप्य लौकिकवैदिकसामर्थ्यं स्वचतुर्दशकरणप्रवृत्तिं च पुत्रे समारोप्य तदभावे शिष्ये वा तदभावे स्वात्मन्येव वा ब्रह्मा त्वं यज्ञस्त्वमित्यभिमन्त्र्य ब्रह्मभावनया ध्यात्वा सावित्रीप्रवेशपूर्वकमप्सु सर्वविद्यार्थस्वरूपां ब्राह्मण्याधारां वेदमातरं क्रमाद्व्याहृतिषु त्रिषु प्रविलाप्य व्याहृतित्रयमकारोकारमकारेषु प्रविलाप्य तत्सावधानेनापः प्राश्य प्रणवेन शिखामुत्कृष्य यज्ञोपवीतं छित्त्वा वस्त्रमपि भूमौ वाऽप्सु वा विसृज्य ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ सुवः स्वाहेत्यनेन जातरूपधरो भूत्वा स्वं रूपं ध्यायन्पुनः पृथक् प्रणवव्याहृतिपूर्वकं मनसा वचसापि संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति मन्द्रमध्यमतारध्वनिभिस्त्रिवारं त्रिगुणीकृतप्रेषोच्चारणं कृत्वा प्रणवैकध्यानपरायणः सन्नभयं सर्वभूतेभ्यो मत्तः स्वाहेत्यूर्ध्वबाहुर्भूत्वा ब्रह्माऽहमस्मीति तत्त्वमस्यादिवाक्यार्थस्वरूपानुसंधानं कुर्वन्नुदीचीं दिशं गच्छेत्। जातरूपधरश्चरेत्। एष संन्यासः। तदधिकारी न भवेद्यदि गृहस्थप्रार्थनापूर्वकमभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते सखा मा गोपायौजः सखा योऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेत्यनेन मन्त्रेण प्रणवपूर्वकं सलक्षणं वैणवं दण्डं कटिसूत्रं कौपीनं कमण्डलुं विवर्णवस्त्रमेकं परिगृह्य सद्गुरुमुपगम्य नत्वा गुरुमुखात्तत्त्वमसीति महावाक्यं प्रणव-

पूर्वकमुपलभ्या । [1]जीर्णवल्कलाजिनं धृत्वाथ जलावतरणमूर्ध्वगमनमेकभिक्षां परित्यज्य त्रिकालस्नानमाचरन्वेदान्तश्रवणपूर्वकं प्रणवानुष्ठानं कुर्वन्ब्रह्ममार्गे सम्यक्संपन्नः स्वाभिमतमात्मनि गोपयित्वा निर्ममोऽध्यात्मनिष्ठः कामक्रोधलोभमोहमदमात्सर्यदम्भदर्पाहंकारासूयागर्वेच्छाद्वेषहर्षामर्षममत्वादींश्च हित्वा ज्ञानवैराग्ययुक्तो वित्तस्त्रीपराङ्मुखः शुद्धमानसः सर्वोपनिषदर्थमालोच्य ब्रह्मचर्यापरिग्रहाहिंसासत्यं यत्नेन रक्षञ्जितेन्द्रियो बहिरन्तःस्नेहवर्जितः शरीरसंधारणार्थं वा [2]त्रिषु वर्णेष्वभिशस्तपतितवर्जितेषु पशुरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति । सर्वेषु कालेषु लाभालाभौ समौ कृत्वा करपात्रमाधूकरेणान्नमश्नन्मेदोवृद्धिमकुर्वन्कृशीभूत्वा ब्रह्माहमस्मीति भावयन्गुर्वर्थं ग्राममुपेत्य ध्रुवशीलोऽष्टौ मास्येकाकी चरेद्द्वावेवाचरेत् । यदालंबुद्धिर्भवेत्तदा कुटीचको वा बहूदको वा हंसो वा परमहंसो वा तत्तन्मन्त्रपूर्वकं कटिसूत्रं कौपीनं दण्डं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेत् । ग्राम एकरात्रं तीर्थे [3]त्रिरात्रं पत्तने पञ्चरात्रं क्षेत्रे सप्तरात्रमनिकेतः स्थिरमतिरनग्निसेवी निर्विकारो नियमानियममुत्सृज्य प्राणसंधारणार्थमयमेव लाभालाभौ समौ कृत्वा गोवृत्त्या भैक्षमाचरन्नुदकस्थलकमण्डलुरबाधकरहस्यस्थलवासो न पुनर्लाभालाभरतः शुभाशुभकर्मनिर्मूलनपरः सर्वत्र भूतलशयनः क्षौरकर्मपरित्यक्तो युक्तचातुर्मास्यव्रतनियमः शुक्लध्यानपरायणोऽर्थस्त्रीपुत्रपराङ्मुखोऽनुन्मत्तोऽप्युन्मत्तवदाचरन्नव्यक्तलिङ्गोऽव्यक्ताचारो दि[4]वानक्तसमत्वेनास्वप्नः स्वरूपानुसंधानब्रह्मप्रणवध्यानमार्गेणावहितः संन्यासेन देहत्यागं करोति स परमहंसपरिव्राजको भवति । भगवन् ब्रह्मप्रणवः कीदृश इति ब्रह्मा पृच्छति । स होवाच नारायणः । ब्रह्मप्रणवः षोडशमात्रात्मकः सोऽवस्थाचतुष्टयचतुष्टयगोचरः । जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः स्वप्ने स्वप्नादिचतस्रोऽवस्थाः सुषुप्तौ सुषुप्त्यादिचतस्रोऽवस्थास्तुरीये तुरीयादिचतस्रोऽवस्था भवन्तीति । जाग्रदवस्थायां विश्वस्य चातुर्विध्यं विश्वविश्वो विश्वतैजसो विश्वप्राज्ञो विश्वतुरीय इति । स्वप्नावस्थायां तैजसस्य चातुर्विध्यं तैजसविश्वस्तैजसतैजसस्तैजसप्राज्ञस्तैजसतुरीय इति । सुषुप्त्यवस्थायां प्राज्ञस्य चातुर्विध्यं प्राज्ञविश्वः प्राज्ञतैजसः प्राज्ञप्राज्ञः प्राज्ञतुरीय इति । तुरीयावस्थायां तुरीयस्य चातुर्विध्यं तुरीयविश्वस्तुरीयतैजसस्तुरीयप्राज्ञस्तुरीयतुरीय इति । ते क्रमेण षोडशमात्रारूढा अकारे जाग्रद्विश्व उकारे जाग्रत्तै-

जसो मकार जाग्रत्प्राज्ञ अर्धमात्रायां जाग्रत्तुरीयो बिन्दौ स्वप्नविश्वो नादे स्वप्न-तैजसः कलायां स्वप्नप्राज्ञः कलातीते स्वप्नतुरीयः शान्तौ सुषुप्तविश्वः शान्त्यतीते सुषुप्ततैजस उन्मन्यां सुषुप्तप्राज्ञो मनोन्मन्यां सुषुप्ततुरीयः तुया तुरीयविश्वो मध्यमायां तुरीयतैजसः पश्यन्त्यां तुरीयप्राज्ञः परायां तुरीयतुरीयः । जाग्रन्मात्राचतुष्टयमकारांशं स्वप्नमात्राचतुष्टयमुकारांशं सुषुप्तिमात्राचतुष्टयं मकारांशं तुरीयमात्राचतुष्टयमर्धमात्रांशम् । अयमेव ब्रह्मप्रणवः । स परमहंसतुरीयातीतावधूतैरुपास्यः । तेनैव ब्रह्म प्रकाशते तेन विदेहमुक्तिः । भगवन् कथमयज्ञोपवीत्यशिखी सर्वकर्मपरित्यक्तः कथं ब्रह्मनिष्ठापरः कथं ब्राह्मण इति ब्रह्मा पृच्छति । स होवाच विष्णुर्भो भोऽर्भक यस्यास्त्यद्वैतमात्मज्ञानं तदेव यज्ञोपवीतम् । तस्य ध्याननिष्ठैव शिखा । तत्कर्म स पवित्रम् । स सर्वकर्मकृत् । स ब्राह्मणः । स ब्रह्मनिष्ठापरः । स देवः । स ऋषिः । स तपस्वी । स श्रेष्ठः । स एव सर्वज्येष्ठः । स एव जगद्गुरुः । स एवाहं विद्धि । लोके परमहंसपरिव्राजको दुर्लभतरो यद्येकोऽस्ति । स एव नित्यपूतः । स एव वेदपुरुषो महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते । अहं च तस्मिन्नेवावस्थितः । स एव नित्यतृप्तः । स शीतोष्णसुखदुःखमानावमानवर्जितः । स निन्दामर्षसहिष्णुः । स षडूर्मिवर्जितः । षड्भावविकारशून्यः । स ज्येष्ठाज्येष्ठव्यवधानरहितः । स स्वव्यतिरेकेण नान्यद्द्रष्टा । आशाम्बरो ननमस्कारो नस्वाहाकारो नस्वधाकारश्च नविसर्जनपरो निन्दास्तुतिव्यतिरिक्तो नमन्त्रतन्त्रोपासको देवान्तरध्यानशून्यो लक्ष्यालक्ष्यनिवर्तकः सर्वोपरतः स सच्चिदानन्दाद्वयचिद्घनः संपूर्णानन्दैकबोधो ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसंधानेन यः कृतकृत्यो भवति स ह परमहंसपरिव्राडित्युपनिषत् ॥ १ ॥

हरिः ॐ तत्सत् ।

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इति परमहंसपरिव्राजकोपनिषत्समाप्ता ॥ ६९ ॥

---

## अक्षमालिकोपनिषत् ॥ ७० ॥

अकारादिक्षकारान्तवर्णजातकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥ १ ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

हरिः ॐ ॥ अथ प्रजापतिर्गुहं पप्रच्छ भो ब्रह्मन्नक्षमालाभेदविधिं ब्रूहीति । सा किंलक्षणा, कति भेदा अस्याः, कति सूत्राणि, कथं घटनाप्रकारः, के वर्णाः,

का प्रतिष्ठा, कैवास्याधिदेवता, किं फलं चेति । तं गुहः प्रत्युवाच प्रवालमौक्तिकस्फटिकशङ्खरजताष्टापदचन्दनपुत्रजीविकाब्जे रुद्राक्षा इति । आदिक्षान्तमूर्तिः सावधानभावा । सौवर्णं राजतं ताम्रं चेति सूत्रत्रयम् । तद्विवरे सौवर्णं तद्दक्षपार्श्वे राजतं तद्वामे ताम्रं तन्मुखे मुखं तत्पुच्छे पुच्छं तदन्तरावर्तनक्रमेण योजयेत् । यदस्यान्तरं सूत्रं तद्ब्रह्म । यद्दक्षपार्श्वे तच्छैवम् । यद्वामे तद्वैष्णवम् । यन्मुखं सा सरस्वती । यत्पुच्छं सा गायत्री । यत्सुषिरं सा विद्या । या ग्रन्थिः सा प्रकृतिः । ये स्वरास्ते धवलाः । ये स्पर्शास्ते पीताः । ये परास्ते रक्ताः । अथ तां पञ्चभिर्गन्धैरमृतैः पञ्चभिर्गव्यैस्तनुभिः शोधयित्वा पञ्चभिर्गव्यैर्गन्धोदकेन संस्नाप्य तस्मात्सोङ्कारेण पत्रकूर्चेन स्नपयित्वाऽष्टभिर्गन्धैरालिप्य सुमनःस्थले निवेश्याक्षतपुष्पैराराध्य प्रत्यक्षमादिक्षान्तैर्वर्णैर्भावयेत् । ओमङ्कार मृत्युंजय सर्वव्यापक प्रथमेऽक्षे प्रतितिष्ठ । ओमाङ्काराकर्षणात्मक सर्वगत द्वितीयेऽक्षे प्रतितिष्ठ । ओमिङ्कार पुष्टिदाक्षोभकर तृतीयेऽक्षे प्रतितिष्ठ । ओमीङ्कार वाक्प्रसादकर निर्मल चतुर्थेऽक्षे प्रतितिष्ठ । ओमुङ्कार सर्वबलप्रद सारतर पञ्चमेऽक्षे प्रतितिष्ठ । ओमूङ्कारोच्चाटनकर दुःसह षष्ठेऽक्षे प्रतितिष्ठ । ओमृङ्कार संक्षोभकर चञ्चल सप्तमेऽक्षे प्रतितिष्ठ । ओमॄङ्कार संमोहनकरोज्वलाष्टमेऽक्षे प्रतितिष्ठ । ओम्लृङ्कार विद्वेषणकर मोहक नवमेऽक्षे प्रतितिष्ठ । ओम्लॄङ्कार मोहकर दशमेऽक्षे प्रतितिष्ठ । ओमेङ्कार सर्ववश्यकर शुद्धसत्त्वैकादशेऽक्षे प्रतितिष्ठ । ओमैङ्कार शुद्धसात्विक पुरुषवश्यकर द्वादशेऽक्षे प्रतितिष्ठ । ओमोङ्काराखिलवाङ्मय नित्यशुद्ध त्रयोदशेऽक्षे प्रतितिष्ठ । ओमौङ्कार सर्ववाङ्मय वश्यकर चतुर्दशेऽक्षे प्रतितिष्ठ । ओमङ्कार गजादिवश्यकर मोहन पञ्चदशेऽक्षे प्रतितिष्ठ । ओमःकार मृत्युनाशनकर रौद्र षोडशेऽक्षे प्रतितिष्ठ । ॐ कङ्कार सर्वविषहर कल्याणद सप्तदशेऽक्षे प्रतितिष्ठ । ॐ खङ्कार सर्वक्षोभकर व्यापकाष्टादशेऽक्षे प्रतितिष्ठ । ॐ गङ्कार सर्वविघ्नशमन महत्तरैकोनविंशेऽक्षे प्रतितिष्ठ । ॐ घङ्कार सौभाग्यद स्तम्भनकर विंशेऽक्षे प्रतितिष्ठ । ॐ ङङ्कार सर्वविषनाशकरोग्रैकविंशेऽक्षे प्रतितिष्ठ । ॐ चङ्काराभिचारघ्न क्रूर द्वाविंशेऽक्षे प्रतितिष्ठ । ॐ छङ्कार भूतनाशकर भीषण त्रयोविंशेऽक्षे प्रतितिष्ठ । ॐ जङ्कार कृत्यादिनाशकर दुर्धर्ष चतुर्विंशेऽक्षे प्रतितिष्ठ । ॐ झङ्कार भूतनाशकर पञ्चविंशेऽक्षे प्रतितिष्ठ । ॐ ञङ्कार मृत्युप्रमथन षड्विंशेऽक्षे प्रतितिष्ठ ।

ॐ टङ्कार सर्वव्याधिहर सुभग सप्तविंशेऽक्षे प्रतितिष्ठ । ॐ ठङ्कार चन्द्ररूपाष्टाविंशेऽक्षे प्रतितिष्ठ । ॐ डङ्कार गरुडात्मक विषघ्न शोभनैकोनत्रिंशेऽक्षे प्रतितिष्ठ । ॐ ढङ्कार सर्वसंपत्प्रद सुभग त्रिंशेऽक्षे प्रतितिष्ठ । ॐ णङ्कार सर्वसिद्धिप्रद मोहकरैकत्रिंशेऽक्षे प्रतितिष्ठ । ॐ तङ्कार धनधान्यादिसंपत्प्रद प्रसन्न द्वात्रिंशेऽक्षे प्रतितिष्ठ । ॐ थङ्कार धर्मप्राप्तिकर निर्मल त्रयस्त्रिंशेऽक्षे प्रतितिष्ठ । ॐ दङ्कार पुष्टिवृद्धिकर प्रियदर्शन चतुस्त्रिंशेऽक्षे प्रतितिष्ठ । ॐ धङ्कार विषज्वरनिघ्न विपुल पञ्चत्रिंशेऽक्षे प्रतितिष्ठ । ॐ नङ्कार भुक्तिमुक्तिप्रद शान्त षट्त्रिंशेऽक्षे प्रतितिष्ठ । ॐ पङ्कार विषविघ्ननाशन भव्य सप्तत्रिंशेऽक्षे प्रतितिष्ठ ॐ फङ्काराणिमादिसिद्धिप्रद ज्योतीरूपाष्टत्रिंशेऽक्षे प्रतितिष्ठ । ॐ बङ्कार सर्वदोषहर शोभनैकोनचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ भङ्कार भूतप्रशान्तिकर भयानक चत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ मङ्कार विद्वेषिमोहनकरैकचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ यङ्कार सर्वव्यापक पावन द्विचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ रङ्कार दाहकर विकृत त्रिचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ लङ्कार विश्वंभर भासुर चतुश्चत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ वङ्कार सर्वाप्यायनकर निर्मल पञ्चचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ शङ्कार सर्वफलप्रद पवित्र षट्चत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ षङ्कार धर्मार्थकामद धवल सप्तचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ सङ्कार सर्वकारण सार्ववर्णिकाष्टचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ हङ्कार सर्ववाङ्मय निर्मलैकोनपञ्चाशदक्षे प्रतितिष्ठ । ॐ ळङ्कार सर्वशक्तिप्रद प्रधान पञ्चाशदक्षे प्रतितिष्ठ । ॐ क्षङ्कार परापरतत्त्वज्ञापक परंज्योतीरूप शिखामणौ प्रतितिष्ठ । अथोवाच ये देवाः पृथिवीपदस्तेभ्यो नमो भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु शोभायै ज्ञानमयीमक्षमालिकाम् । अथोवाच ये देवा अन्तरिक्षसदस्तेभ्य ॐ नमो भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु शोभायै ज्ञानमयीमक्षमालिकाम् । अथोवाच ये देवा दिविषदस्तेभ्यो नमो भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु शोभायै ज्ञानमयीमक्षमालिकाम् । अथोवाच ये मन्त्रा या विद्यास्तेभ्यो नमस्ताभ्यश्चोन्नमस्तच्छक्तिरस्याः प्रतिष्ठापयति । अथोवाच ये ब्रह्मविष्णुरुद्रास्तेभ्यः सगुणेभ्य ॐ नमस्तद्वीर्यमस्याः प्रतिष्ठापयति । अथोवाच ये सांख्यादितत्त्वभेदास्तेभ्यो नमो वर्तध्वं विरोधेऽनुवर्तध्वम् । अथोवाच ये शैवा वैष्णवाः शाक्ताः शतसहस्रशस्तेभ्यो नमो नमो भगवन्तोऽनुमदन्त्वनुगृह्णन्तु । अथोवाच

याश्च मृत्योः प्राणवत्यस्ताभ्यो नमो नमस्तेनैतं मृडयत मृडयत । पुनरेतस्यां सर्वात्मकत्वं भावयित्वा भावेन पूर्वमालिकामुत्पाद्यारभ्य तन्मयीं महोपहारै-रुपहृत्यादिक्षान्तैरक्षरैरक्षमालामष्टोत्तरशतं स्पृशेत् । अथ पुनरुत्थाप्य प्रदक्षिणीकृत्यों नमस्ते भगवति मन्त्रमातृकेऽक्षमाले सर्ववशंकर्यों नमस्ते भगवति मन्त्रमातृकेऽक्षमालिके शेषस्तम्भिन्यों नमस्ते भगवति मन्त्रमातृकेऽक्षमाले उच्चाटन्यों नमस्ते भगवति मन्त्रमातृकेऽक्षमाले विश्वामृत्यों मृत्युंजयस्वरूपिणि सकललोकोद्दीपिनि सकललोकरक्षाधिके सकललोकोज्जीविके सकललोको-त्पादिके दिवाप्रवर्तिके रात्रिप्रवर्तिके नद्यन्तरं यासि देशान्तरं यासि द्वीपान्तरं यासि लोकान्तरं यासि सर्वदा स्फुरसि सर्वहृदि वाससि । नमस्ते परारूपे नमस्ते पश्यन्तीरूपे नमस्ते मध्यमारूपे नमस्ते वैखरीरूपे सर्वतत्त्वा-त्मिके सर्वविद्यात्मिके सर्वशक्त्यात्मिके सर्वदेवात्मिके वसिष्ठेन मुनिनाराधिते विश्वामित्रेण मुनिनोपजीव्यमाने नमस्ते नमस्ते । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत्सायंप्रातः प्रयुञ्जानः पापोऽपापो भवति । एवमक्षमालिकया जप्तो मन्त्रः सद्यःसिद्धिकरो भवतीत्याह भगवान्गुहः प्रजापतिमित्युपनिषत् ॥ १ ॥ हरिः ॐ तत्सत् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥

इत्यक्षमालिकोपनिषत्समाप्ता ॥ ७० ॥

---

# अव्यक्तोपनिषत् ॥ ७१ ॥

स्वाज्ञानासुरराड्ग्रासस्वज्ञाननरकेसरी ।
प्रतियोगिविनिर्मुक्तं ब्रह्ममात्रं करोतु माम् ॥ १ ॥

ॐ आप्यायन्त्विति शान्तिः ॥

हरिः ॐ ॥ पुरा किलेदं न किंचनासीन्न द्यौर्नान्तरिक्षं न पृथिवी केवलं ज्योतीरूपमनाद्यनन्तमनण्वस्थूलरूपमरूपं रूपवदविज्ञेयं ज्ञानरूपमानन्दम-यमासीत् । तदनन्यत्तद्द्वेधाऽभूद्धरितमेकं रक्तमपरम् । तत्र यद्रक्तं तत्पुंसो रूपमभूत् । यद्धरितं तन्मायायाः । तौ समगच्छतः । तयोर्वीर्यमेवमनन्दत् । तदवर्धत । तदण्डमभूद्धैमम् । तत्परिणममानमभूत् । ततः परमेष्ठी व्यजा-यत । सोऽभिजिज्ञासत किं मे कुलं किं मे कृत्यमिति । तं ह वागदृश्यमाना-ऽभ्युवाच-भो भो प्रजापते त्वमव्यक्तादुत्पन्नोऽसि व्यक्तं, ते कृत्यमिति । किम-

व्यक्तं यस्मादहमासिषम् । किं तद्व्यक्तं यन्मे कृत्यमिति । साऽब्रवीदविज्ञेयं हि तत्सौम्य तेजः । यदविज्ञेयं तदव्यक्तम् । तच्चेज्जिज्ञाससि माऽवगच्छेति । स होवाच कैषा त्वं ब्रह्मवाग्यदसि शंसात्मानमिति । सा त्वब्रवीत्तपसा मां विजिज्ञासस्वेति । स ह सहस्रं समा ब्रह्मचर्यमध्युवासाध्युवास ॥ १ ॥ अथापश्यदृचमानुष्टुभीं परमां विद्यां यस्याङ्गान्यन्ये मन्त्राः । यत्र ब्रह्म प्रतिष्ठितम् । विश्वेदेवाः प्रतिष्ठिताः । यस्तां न वेद किमन्यैर्वेदैः करिष्यति । तां विदित्वा स च रक्तं जिज्ञासयामास । तामेवमनूचानां गायन्नासिष्ट । सहस्रं समा आद्यन्तनिहितोङ्कारेण पदान्यगायत् । सहस्रं समास्तथैवाक्षरशः । ततोऽपश्यज्ज्योतिर्मयं श्रियालिङ्गितं सुपर्णरथं शेषफणाच्छादितमौलिं मृगमुखं नरवपुषं शशिसूर्यहव्यवाहनात्मकनयनत्रयम् । ततः प्रजापतिः प्रणिपपात नमो नम इति । तयैवर्चाथ तमस्तौत् । उग्रमित्याह उग्रः खलु वा एष मृगारूपत्वात् । वीरमित्याह वीरो वा एष वीर्यवत्त्वात् । महाविष्णुमित्याह महतां वा अयं महान्रोदसी व्याप्य स्थितः ज्वलन्तमित्याह ज्वलन्निव खल्वसाववस्थितः । सर्वतोमुखमित्याह सर्वतः खल्वयं मुखवान्विश्वरूपत्वात् । नृसिंहमित्याह यथा यजुरेवैतत् । भीषणमित्याह भीषा वा अस्मादादित्य उदेति भीतश्चन्द्रमा भीतो वायुर्वाति भीतोऽग्निर्दहति भीतः पर्जन्यो वर्षति । भद्रमित्याह भद्रः खल्वयं श्रिया जुष्टः । मृत्योर्मृत्युमित्याह मृत्योर्वा अयं मृत्युरमृतत्वं प्रजानामन्नादानाम् । नमामीत्याह यथा यजुरेवैतत् । अहमित्याह यथा यजुरेवैतत् ॥ २ ॥ अथ भगवांस्तमब्रवीत्प्रजापते प्रीतोऽहं किं तवेप्सितं तदाशंसेति । स होवाच भगवन्नव्यक्तादुत्पन्नोऽस्मि व्यक्तं मम कृत्यमिति पुराऽश्रावि । तत्राव्यक्तं भवानित्यज्ञायि व्यक्तं मे कथयेति । व्यक्तं वै विश्वं चराचरात्मकम् । यद्व्यज्यते तद्व्यक्तस्य व्यक्तत्वमिति । स होवाच न शक्नोमि जगत्स्रष्टुमुपायं मे कथयेति । तमुवाच पुरुषः प्रजापते शृणु सृष्टेरुपायं परमं यं विदित्वा सर्वं ज्ञास्यसि । सर्वत्र शक्ष्यसि सर्वं करिष्यसि । मय्यग्नौ स्वात्मानं हविर्ध्यायेत्तयैवाऽनुष्टुभर्चा । ध्यानयज्ञोऽयमेव । एतद्वै महोपनिषद्देवानां गुह्यम् । न ह वा एतस्य साम्ना नर्चा न यजुषाऽर्थो नु विद्यते । य इमां वेद स सर्वान्कामानवाप्य सर्वांल्लोकाञ्जित्वा मामेवाभ्युपैति न स पुनरावर्तते य एवं वेदेति ॥ ३ ॥ प्रजापतिस्तं यज्ञाय वसीयांसमात्मानं मन्यमानो मनोयज्ञेनेजे । सप्रणवया तयैवर्चा

हविर्ध्यात्वाऽऽत्मानमात्मन्यग्नौ जुहुयात् । सर्वमजानात्सर्वत्राशकत्सर्वमकरोत् । य एवं विद्वानिमं ध्यानयज्ञमनुतिष्ठेत्स सर्वज्ञोऽनन्तशक्तिः सर्वकर्ता भवति । स सर्वाँल्लोकाञ्जित्वा ब्रह्म परं प्राप्नोति ॥ ४ ॥ अथ प्रजापतिर्लोकान्सिसृक्षमाणस्तस्या एव विद्याया यानि त्रिंशदक्षराणि तेभ्यस्त्री ँल्लोकान् । अथ द्वे द्वे अक्षरे ताभ्यामुभयतो दधार । तस्या एवर्चो द्वात्रिंशद्भिरक्षरैस्तान्देवान्निर्ममे । सर्वैरेव स इन्द्रोऽभवत् । तस्मादिन्द्रो देवानामधिकोऽभवत् । य एवं वेद समानानामधिको भवेत् । तस्या एकादशभिः पादैरेकादश रुद्रान्निर्ममे । तस्या एकादशभिरेकादशादित्यान्निर्ममे । सर्वैरेव स विष्णुरभवत् । तस्माद्विष्णुरादित्यानामधिकोऽभवत् । य एवं वेद समानानामधिको भवेत् । स चतुर्भिश्चतुर्भिरक्षरैरष्टौ वसूनजनयत् । स तस्या आद्यैर्द्वादशभिरक्षरैर्ब्राह्मणमजनयत् । दशभिर्दशभिर्विट्क्षत्रे । तस्माद्ब्राह्मणो मुख्यो भवति । एवं तन्मुख्यो भवति य एवं वेद । तूष्णीं शूद्रमजनयत्तस्माच्छूद्रो निर्विद्योऽभवत् । न वेदं दिवा न नक्तमासीदव्याकृतं । स प्रजापतिरानुष्टुभाभ्यामर्धर्चाभ्यामहोरात्रावकल्पयत् । ततो व्यैच्छत् व्येवास्मा उच्छति । अथो तम एवापहते । ऋग्वेदमस्या आद्यात्पादादकल्पयत् । यजुर्द्वितीयात् । साम तृतीयात् । अथर्वाङ्गिरसश्चतुर्थात् । यदष्टाक्षरपदा तेन गायत्री । यदेकादशपदा तेन त्रिष्टुप् । यच्चतुष्पदा तेन जगती । यद्द्वात्रिंशदक्षरा तेनानुष्टुप् । सा वा एषा सर्वाणि छन्दांसि । य इमां सर्वाणि छन्दांसि वेद । सर्वं जगदानुष्टुभ एवोत्पन्नमनुष्टुप्प्रतिष्ठितं प्रतितिष्ठति यश्चैवं वेद ॥ ५ ॥ अथ यदा प्रजाः सृष्टा न जायन्ते प्रजापतिः कथं न्विमाः प्रजाः सृजेयमिति चिन्तयन्नुप्रसितीमामृचं गातुमुपाक्रामत् । ततः प्रथमपादादुग्ररूपो देवः प्रादुरभूत् । एकः श्यामः पुरतो रक्तः पिनाकी स्त्रीपुंसरूपस्तं विभज्य स्त्रीषु तस्य स्त्रीरूपं पुंसि च पुंरूपं व्यधात् । स उभाभ्यामंशाभ्यां सर्वमादिष्टः । ततः प्रजाः प्रजायन्ते । य एवं वेद प्रजापतेः सोऽपि त्र्यम्बक इमामृचमुद्गायन्नुद्ग्रथितजटाकलापः प्रत्यग्ज्योतिष्यात्मन्येव रन्तारमिति । इन्द्रो वै किल देवानामनुजावर आसीत् । तं प्रजापतिरब्रवीद्गच्छ देवानामधिपतिर्भवेति । सोऽगच्छत् । तं देवा ऊचुरनुजावरोऽसि त्वमस्माकं कुतस्तवाधिपत्यमिति । स प्रजापतिमभ्ये-

स्योवाचैवं देवा ऊचुरनुजावरस्य कुतस्त्वाधिपत्यमिति । तं प्रजापतिरिन्द्रं त्रिकलशैरमृतपूर्णैरानुष्टुभाऽभिमन्त्रितैरभिषिच्य तं सुदर्शनेन दक्षिणतो ररक्ष पाञ्चजन्येन वामतो द्वयेनैन सुरक्षितोऽभवत् । रौक्मे फलके सूर्यवर्चसि मन्त्रमानुष्टुभं विन्यस्य तदस्य कण्ठे प्रत्यमुञ्चत् । ततः सुदुर्निरीक्षोऽभवत् । तस्मै विद्यामानुष्टुभीं प्रादात् । ततो देवास्तमाधिपत्यायानुमेनिरे । स स्वराडभूत् । य एवं वेद स्वराड् भवेत् । सोऽमन्यत पृथिवीमपि कथमपां जयेयमिति । स प्रजापतिमुपाधावत् । तस्मात्प्रजापतिः कमठाकारमिन्द्रनागभुजगेन्द्राधारं भद्रासनं प्रादात् । स पृथिवीमभ्यजयत् । ततः स उभयोर्लोकयोरधिपतिरभूत् । य एवं वेदोभयोर्लोकयोरधिपतिर्भवति । स पृथिवीं जयति यो वा अप्रतिष्ठितं शिथिलं भ्रातृव्येभ्यः परमात्मानं मन्यते । स एतमासीनमधितिष्ठेत् । प्रतिष्ठितोऽशिथिलो भ्रातृव्येभ्यो वसीयान्भवति यश्चैवं वेद यश्चैवं वेद ॥ ६ ॥ य इमां विद्यामधीते स सर्वान्वेदानधीते । स सर्वैः क्रतुभिर्यजते । स सर्वतीर्थेषु स्नाति । स महापातकोपपातकैः प्रमुच्यते । स ब्रह्मवर्चसं महदाप्नुयात् । आ ब्रह्मणः पूर्वानाकल्पांश्चोत्तरांश्च वंश्यान्पुनीते । नैनमपस्मारादयो रोगा आदिधेयुः । सयक्षाः सप्रेतपिशाचा अप्येनं स्पृष्ट्वा दृष्ट्वा श्रुत्वा वा पापिनः पुण्याँल्लोकानवाप्नुयुः । चिन्तितमात्रादस्य सर्वेऽर्थाः सिध्येयुः । पितरमिवैनं सर्वे मन्यन्ते । राजानश्चास्यादेशकारिणो भवन्ति । न चाचार्यव्यतिरिक्तं श्रेयांसं दृष्ट्वा नमस्कुर्यात् । न चास्मादुपावरोहेत् । जीवन्मुक्तश्च भवति । देहान्ते तमसः परं धाम प्राप्नुयात् । यत्र विराण् नृसिंहोऽत्रभासते तत्र खल्पासते । तत्स्वरूपध्यानपरा मुनय आकल्पान्ते तस्मिन्नेवात्मनि लीयन्ते । न च पुनरावर्तन्ते । न चेमां विद्यामश्रद्दधानाय ब्रूयान्नासूयावते नानूचानाय नाविष्णुभक्ताय नानृतिने नातपसे नादान्ताय नाशान्ताय नादीक्षिताय नाधर्मशीलाय न हिंसकाय नाब्रह्मचारिण इत्येषोपनिषत् ॥ १ ॥ हरिः ॐ तत्सत् ॥

ॐ आप्यायन्त्विति शान्तिः ॥

इत्यव्यक्तोपनिषत्समाप्ता ॥ ७१ ॥

# एकाक्षरोपनिषत् ॥ ७२ ॥

एकाक्षरपदारूढं सर्वात्मकमखण्डितम् ।
सर्ववर्जितचिन्मात्रं त्रिपान्नारायणं भजे ॥ १ ॥

ॐ स ह नाववत्विति शान्तिः ॥

हरिः ॐ ॥ एकाक्षरं त्वक्षरेऽत्रास्ति सोमे सुषुम्नायां चेह दृढी स एकः । त्वं विश्वभूर्भूतपतिः पुराणः पर्जन्य एको भुवनस्य गोप्ता ॥ १ ॥ विश्वे निमग्नपदवीः कवीनां त्वं जातवेदो भुवनस्य नाथः । अजातमग्रे स हिरण्यरेता यज्ञस्त्वमेवैकविभुः पुराणः ॥ २ ॥ प्राणः प्रसूतिर्भुवनस्य योनिर्व्याप्तं त्वया एकपदेन विश्वम् । त्वं विश्वभूर्योनिपराः स्वगर्भे कुमार एको विशिखः सुधन्वा ॥ ३ ॥ वितत्य बाणं तरुणार्कवर्णं व्योमान्तरे भासि हिरण्यगर्भः । भासा त्वया व्योम्नि कृतः सुताक्ष्यर्स्त्वं वै कुमारस्त्वमरिष्टनेमिः ॥ ४ ॥ त्वं वज्रभृद्भूतपतिस्त्वमेव कामः प्रजानां निहितोऽसि सोमे । स्वाहा स्वधा यच्च वषट् करोति रुद्रः पशूनां गुहया निमग्नः ॥ ५ ॥ धाता विधाता पवनः सुपर्णो विष्णुर्वराहो रजनी रहश्च । भूतं भविष्यत्प्रभवः क्रियाश्च कालः क्रमस्त्वं परमाक्षरं च ॥ ६ ॥ ऋचो यजूंषि प्रसवन्ति वक्त्रात्सामानि सम्राड्वसुरन्तरिक्षम् । त्वं यज्ञनेता हुतभुग्विभुश्च रुद्रास्तथा दैत्यगणा वसुश्च ॥ ७ ॥ स एष देवोऽम्बरगश्च चक्रे अन्येऽभ्यधिष्टेत तमो निरुन्ध्यः । हिरण्मयं यस्य विभाति सर्वं व्योमान्तरे रश्मिमिवांशुनाभिः ॥ ८ ॥ स सर्ववेत्ता भुवनस्य गोप्ता ताभिः प्रजानां निहिता जनानाम् । प्रोता त्वमोता विचितिः क्रमाणां प्रजापतिश्छन्दमयो विगर्भः ॥ ९ ॥ सामैश्चिदन्तो विरजश्च बाहुं हिरण्मयं वेदविदां वरिष्ठम् । यमध्वरे ब्रह्मविदः स्तुवन्ति सामैर्यजुर्भिः क्रतुभिस्त्वमेव ॥ १० ॥ त्वं स्त्री पुमांस्त्वं च कुमार एकस्त्वं वै कुमारी ह्यथ भूस्त्वमेव । त्वमेव धाता वरुणश्च राजा त्वं वत्सरोऽग्न्यर्यम एव सर्वम् ॥ ११ ॥ मित्रः सुपर्णश्चन्द्र इन्द्रो वरुणो रुद्रस्त्वष्टा विष्णुः सविता गोपतिस्त्वम् । त्वं विष्णुर्भूतानि तु त्रासि दैत्यांस्त्वयाऽऽवृतं जगदुद्भवगर्भः ॥१२॥ त्वं भूर्भुवः स्वस्त्वं

हि स्वयंभूरथ विश्वतोमुखः । य एवं नित्यं वेदयते गुहाशयं प्रभुं पुराणं सर्वभूतं हिरण्मयम् ॥ १३ ॥ हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान्बुद्धिमतीत्य तिष्ठतीत्युपनिषत् ॥ १ ॥ हरिः ॐ तत्सत् ॥

ॐ स ह नाववत्विति शान्तिः ॥

इत्येकाक्षरोपनिषत्समाप्ता ॥ ७२ ॥

---

# अन्नपूर्णोपनिषत् ॥ ७३ ॥

सर्वापह्नवसंसिद्धब्रह्ममात्रतयोज्ज्वलम् ।
त्रैपदं श्रीरामतत्त्वं स्वमात्रमिति भावये ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ निदाघो नाम योगीन्द्र ऋभुं ब्रह्मविदां वरम् । प्रणम्य दण्डवद्भूमावुत्थाय स पुनर्मुनिः ॥ १ ॥ आत्मतत्त्वमनुब्रूहीत्येवं पप्रच्छ सादरम् । कयोपासनया ब्रह्मन्नीदृशं प्राप्तवानसि ॥ २ ॥ तां मे ब्रूहि महाविद्यां मोक्षसाम्राज्यदायिनीम् । निदाघ त्वं कृतार्थोऽसि शृणु विद्यां सनातनीम् ॥ ३ ॥ यस्या विज्ञानमात्रेण जीवन्मुक्तो भविष्यसि । मूलशृङ्गाटमध्यस्था बिन्दुनादकलाश्रया ॥ ४ ॥ नित्यानन्दा निराधारा विख्याता विलसत्कचा । विष्टपेशी महालक्ष्मीः कामस्तारो नतिस्तथा ॥ ५ ॥ भगवत्यन्नपूर्णेति ममाभिलषितं ततः । अन्नं देहि ततः स्वाहा मन्त्रसारेति विश्रुता ॥ ६ ॥ सप्तविंशतिवर्णात्मा योगिनीगणसेविता ॥ ७ ॥ ऐं ह्रीं सौः श्रीं क्लीं ॐ नमो भगवत्यन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा । इति पित्रोपदिष्टोऽस्मि तदादिनियमः स्थितः । कृतवान्स्वाश्रमाचारो मन्त्रानुष्ठानमन्वहम् ॥ ८ ॥ एवं गते बहुदिने प्रादुरासीन्ममाग्रतः । अन्नपूर्णा विशालाक्षी स्मयमानमुखाम्बुजा ॥ ९ ॥ तां दृष्ट्वा दण्डवद्भूमौ नत्वा प्राञ्जलिरास्थितः । अहो वत्स कृतार्थोऽसि वरं वरय मा चिरम् ॥ १० ॥ एवमुक्तो विशालाक्ष्या मयोक्तं मुनिपुङ्गव । आत्मतत्त्वं मनसि मे प्रादुर्भवतु पार्वति ॥ ११ ॥ तथैवास्त्विति मामुक्त्वा तत्रैवान्तरधीयत । तदा मे मतिरुत्पन्ना जगद्वैचित्र्यदर्शनात् ॥ १२ ॥ भ्रमः पञ्चविधो भाति तदेवेह समुच्यते । जीवेश्वरौ भिन्नरूपाविति प्राथमिको भ्रमः ॥ १३ ॥

आत्मनिष्ठं कर्तृगुणं वास्तवं वा द्वितीयकः । शरीरत्रयसंयुक्तजीवः सङ्गी तृतीयकः ॥ १४ ॥ जगत्कारणरूपस्य विकारित्वं चतुर्थकः । कारणाद्भिन्नजगतः सत्यत्वं पञ्चमो भ्रमः । पञ्चभ्रमनिवृत्तिश्च तदा स्फुरति चेतसि ॥ १५ ॥ बिम्बप्रतिबिम्बदर्शनेन भेदभ्रमो निवृत्तः । स्फटिकलोहितदर्शनेन पारमार्थिककर्तृत्वभ्रमो निवृत्तः । घटमठाकाशदर्शनेन सङ्गीतिभ्रमो निवृत्तः । रज्जुसर्पदर्शनेन कारणाद्भिन्नजगतः सत्यत्वभ्रमो निवृत्तः । कनकरुचकदर्शनेन विकारित्वभ्रमो निवृत्तः । तदाप्रभृति मच्चित्तं ब्रह्माकारमभूत्स्वयम् । निदाघ त्वमपीत्थं हि तत्त्वज्ञानमवाप्नुहि ॥ १६ ॥ निदाघः प्रणतो भूत्वा ऋभुं पप्रच्छ सादरम् । ब्रूहि मे श्रद्दधानाय ब्रह्मविद्यामनुत्तमाम् ॥ १७ ॥ तथेत्याह ऋभुः प्रीतस्तत्त्वज्ञानं वदामि ते । महाकर्ता महाभोक्ता महात्यागी भवानघ । स्वस्वरूपानुसंधानमेवं कृत्वा सुखी भव ॥ १८ ॥ नित्योदितं विमलमाद्यमनन्तरूपं ब्रह्माऽस्मि नेतरकलाकलनं हि किंचित् । इत्येव भावय निरञ्जनतामुपेतो निर्वाणमेहि सकलामलशान्तवृत्तिः ॥ १९ ॥ यदिदं दृश्यते किंचित्तत्तन्नास्तीति भावय । यथा गन्धर्वनगरं यथा वारि मरुस्थले ॥ २० ॥ यत्तु नो दृश्यते किंचिद्यन्नु किंचिदिव स्थितम् । मनःषष्ठेन्द्रियातीतं तन्मयो भव वै मुने ॥ २१ ॥ अविनाशि चिदाकाशं सर्वात्मकमखण्डितम् । नीरन्ध्रं भूरिवाशेषं तदस्मीति विभावय ॥ २२ ॥ यदा संक्षीयते चित्तमभावात्यन्तभावनात् । चित्सामान्यस्वरूपस्य सत्तासामान्यता तदा ॥ २३ ॥ नूनं चैत्यांशरहिता चिद्यदात्मनि लीयते । असद्रूपवदत्यच्छा सत्तासामान्यता तदा ॥ २४ ॥ दृष्टिरेषा हि परमा सदेहादेहयोः समा । मुक्तयोः संभवत्येव तुर्यातीतपदाभिधा ॥ २५ ॥ व्युत्थितस्य भवत्येषा समाधिस्थस्य चानघ । ज्ञस्य केवलमज्ञस्य न भवत्येव बोधजा । अनानन्दसमानन्दमुग्धमुग्धमुखद्युतिः ॥ २६ ॥ चिरकालपरिक्षीणमननादिपरिश्रमः । पदमासाद्यते पुण्यं प्रज्ञयैवैकया तथा ॥ २७ ॥ इमं गुणसमाहारमनात्मत्वेन पश्यतः । अन्तःशीतलया याऽसौ समाधिरिति कथ्यते ॥२८॥ अवासनं स्थिरं प्रोक्तं मनोध्यानं तदेव च । तदेव केवलीभावं शान्ततैव च तत्सदा ॥२९॥ तनुवासनमत्युच्चैः पदायोद्यतमुच्यते । अवासनं मनोऽकर्तृपदं तस्मादवाप्यते ॥ ३० ॥ घनवासनमेतत्तु चेतःकर्तृत्वभावनम् । सर्वदुःखप्रदं तस्माद्वासनां तनुतां नयेत् ॥ ३१ ॥

न्चेतसा संपरित्यज्य सर्वभावात्मभावनाम् । सर्वमाकाशतामेति नित्यमन्तर्मुख-स्थितेः ॥ ३२ ॥ यथा विपणगा लोका विहरन्तोऽप्यसत्समाः । असंबन्धा-त्तथा ज्ञस्य ग्रामोऽपि विपिनोपमः ॥ ३३ ॥ अन्तर्मुखतया नित्यं सुप्तो बुद्धो व्रजन्पठन् । पुरं जनपदं ग्राममरण्यमिव पश्यति ॥ ३४ ॥ अन्तःशीतलतायां तु लब्धायां शीतलं जगत् । अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत् ॥ ३५ ॥ भवत्यखिलजन्तूनां यदन्तस्तद्बहिः स्थितम् ॥ ३६ ॥ यस्त्वात्मरति-रेवान्तः कुर्वन्कर्मेन्द्रियैः क्रियाः । न वशो हर्षशोकाभ्यां स समाहित उच्यते ॥ ३७ ॥ आत्मवत्सर्वभूतानि परद्रव्याणि लोष्टवत् । स्वभावादेव न भयाद्यः पश्यति स पश्यति ॥ ३८ ॥ अद्यैव मृतिरायातु कल्पान्तनिचयेन वा । नासौ कलङ्कमाप्नोति हेम पङ्कगतं यथा ॥ ३९ ॥ कोऽहं कथमिदं किं वा कथं मरणजन्मनी । विचारयान्तरे वेत्थं महत्तत्फलमेष्यसि ॥ ४० ॥ विचा-रेण परिज्ञातस्वभावस्य सतस्तव । मनः स्वरूपमुत्सृज्य शममेष्यति विज्वरम् ॥ ४१ ॥ विज्वरत्वं गतं चेतस्तव संसारवृत्तिषु । न निमज्जति तद्ब्रह्मन्गोष्प-देष्विव वारणः ॥ ४२ ॥ कृपणं तु मनो ब्रह्मन्गोष्पदेऽपि निमज्जति । कार्ये गोष्पदतोयेऽपि विशीर्णो मशको यथा ॥ ४३ ॥ यावद्यावन्मुनिश्रेष्ठ स्वयं संत्यज्यतेऽखिलम् । तावत्तावत्परालोकः परमात्मैव शिष्यते ॥ ४४ ॥ याव-त्सर्वं न संत्यक्तं तावदात्मा न लभ्यते । सर्ववस्तुपरित्यागे शेष आत्मेति कथ्यते ॥ ४५ ॥ आत्मावलोकनार्थं तु तस्मात्सर्वं परित्यजेत् । सर्वं संत्यज्य दूरेण यच्छिष्टं तन्मयो भव ॥ ४६ ॥ सर्वं किंचिदिदं दृश्यं दृश्यते यज्जगद्ग-तम् । चिन्निष्पन्दांशमात्रं तन्नान्यत्किंचन शाश्वतम् ॥ ४७ ॥ समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी । ब्रह्मन्समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ४८ ॥ अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी । प्रोक्ता समाधिशब्देन मेरोः स्थिरतरा स्थितिः ॥ ४९ ॥ निश्चिता विगताभीष्टा हेयोपादेयवर्जिता । ब्रह्मन्समाधिशब्देन परिपूर्णा मनोगतिः ॥ ५० ॥ केवलं चित्प्रकाशांश-कल्पिता स्थिरतां गता । तुर्या सा प्राप्यते दृष्टिर्महद्भिर्वेदवित्तमैः ॥ ५१ ॥ अदूरगतसादृश्या सुषुप्तस्योपलक्ष्यते । मनोहंकारविलये सर्वभावान्तरस्थिता ॥ ५२ ॥ समुदेति परानन्दा या तनुः पारमेश्वरी । मनसैव मनश्छित्त्वा सा स्वयं लभ्यते गतिः ॥ ५३ ॥ तदनु विषयवासनाविनाशस्तदनु शुभः परमः

स्फुटप्रकाशः। तदनु च समतावशात्स्वरूपे परिणमनं महतामचिन्त्यरूपम् ॥ ५४ ॥ अखिलमिदमनन्तमात्मतत्त्वं दृढपरिणामिनि चेतसि स्थितोऽन्तः। बहिरुपशमिते चराचरात्मा स्वयमनुभूयत एव देवदेवः ॥ ५५ ॥ असक्तं निर्मलं चित्तं युक्तं संसार्यपिस्फुटम्। सक्तं तु दीर्घतपसा मुक्तमप्यतिबद्धवत् ॥ ५६ ॥ अन्तःसंसक्तिनिर्मुक्तो जीवो मधुरवृत्तिमान्। बहिः कुर्वन्नकुर्वन्वा कर्ता भोक्ता न हि क्वचित् ॥ ५७ ॥

इत्यन्नपूर्णोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

निदाघ उवाच ॥ सङ्गः कीदृश इत्युक्तः कश्च बन्धाय देहिनाम्। कश्च मोक्षाय कथितः कथं त्वेष चिकित्स्यते ॥ १ ॥ देहदेहिविभागैकपरित्यागेन भावना। देहमात्रे हि विश्वासः सङ्गो बन्धाय कथ्यते ॥ २ ॥ सर्वमात्मेदमत्राहं किं वाञ्छामि त्यजामि किम्। इत्यसङ्गस्थितिं विद्धि जीवन्मुक्ततनुस्थिताम् ॥ ३ ॥ नाहमस्मि न चान्योऽस्ति न चायं न च नेतरः। सोऽसङ्ग इति संप्रोक्तो ब्रह्मास्मीत्येव सर्वदा ॥ ४ ॥ नाभिनन्दति नैष्कर्म्यं न कर्मस्वनुषज्जते। सुसमो यः परित्यागी सोऽसंसक्त इति स्मृतः ॥ ५ ॥ सर्वकर्मफलादीनां मनसैव न कर्मणा। निपुणो यः परित्यागी सोऽसंसक्त इति स्मृतः ॥ ६ ॥ असंकल्पेन सकलाश्चेष्टा नाना विजृम्भिताः। चिकित्सिता भवन्तीह श्रेयः संपादयन्ति हि ॥ ७ ॥ न सक्तमिह चेष्टासु न चिन्तासु न वस्तुषु। न गमागमचेष्टासु न कालकलनासु च ॥ ८ ॥ केवलं चिति विश्रम्य किंचिच्चैत्यावलम्ब्यपि। सर्वत्र नीरसमिह तिष्ठत्यात्मरसं मनः ॥ ९ ॥ व्यवहारमिदं सर्वं मा करोतु करोतु वा। अकुर्वन्नापि कुर्वन्वा जीवः स्वात्मरतिक्रियः ॥ १० ॥ अथवा तमपि त्यक्त्वा चैत्यांशं शान्तचिद्घनः। जीवस्तिष्ठति संशान्तो ज्वलन्मणिरिवात्मनि ॥ ११ ॥ चित्ते चैत्यदशाहीने या स्थितिः क्षीणचेतसाम्। सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥ १२ ॥ एषा निदाघ सौषुप्तस्थितिरभ्यासयोगतः। प्रौढा सती तुरीयेति कथिता तत्त्वकोविदैः ॥ १३ ॥ अस्यां तुरीयावस्थायां स्थितिं प्राप्याविनाशिनीम्। आनन्दैकान्तशीलत्वादनानन्दपदं गतः ॥ १४ ॥ अनानन्दमहानन्दकालातीतस्ततोऽपि हि। मुक्त इत्युच्यते योगी तुर्यातीतपदं गतः ॥ १५ ॥ परिगलितसमस्तजन्मपाशः सकलविलीनतमोमयाभिमानः। परमरसमयीं परात्मसत्तां जलगतसैन्धवखण्डवन्महात्मा

॥ १६ ॥ जडाजडदृशोर्मध्ये यत्तत्त्वं पारमार्थिकम् । अनुभूतिमयं तस्मात्सारं ब्रह्मेति कथ्यते ॥ १७ ॥ दृश्यसंवलितो बन्धस्तन्मुक्तौ मुक्तिरुच्यते । द्रष्टृदर्शनसंबन्धे याऽनुभूतिरनामया ॥१८॥ तामवष्टभ्य तिष्ठ त्वं सौषुप्तीं भजते स्थितिम् । सैव तुर्यत्वमाप्नोति तस्यां दृष्टिं स्थिरां कुरु ॥ १९ ॥ आत्मा स्थूलो न चैवाणुर्न प्रत्यक्षो न चेतरः । न चेतनो न च जडो न चैवासन्न सन्मयः ॥ २० ॥ नाहं नान्यो न चैवैको न चानेकोऽद्वयोऽव्ययः । यदीदं दृश्यतां प्राप्तं मनः सर्वेन्द्रियास्पदम् ॥ २१ ॥ दृश्यदर्शनसंबन्धे यत्सुखं पारमार्थिकम् । तदतीतं पदं यस्मात्तन्न किंचिदिवैव तत् ॥ २२ ॥ न मोक्षो नभसः पृष्ठे न पाताले न भूतले । सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥ २३ ॥ मोक्षो मेऽस्त्विति चिन्ताऽन्तर्जाता चेदुत्थितं मनः । मननोत्थे मनस्येष बन्धः सांसारिको दृढः ॥ २४ ॥ आत्मन्यतीते सर्वस्मात्सर्वरूपेऽथ वा तते । को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ २५ ॥ अध्यात्मरतिराशान्तः पूर्णपावनमानसः । प्राप्तानुत्तमविश्रान्तिर्न किंचिदिह वाञ्छति ॥ २६ ॥ सर्वाधिष्ठानसन्मात्रे निर्विकल्पे चिदात्मनि । यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ २७ ॥ नापेक्षते भविष्यच्च वर्तमाने न तिष्ठति । न संस्मरत्यतीतं च सर्वमेव करोति च ॥ २८ ॥ अनुबन्धपरे जन्तावसंसर्गमनाः सदा । भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ २९ ॥ बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् । युवा यौवनवृत्तेषु दुःखितेषु सुदुःखधीः ॥ ३० ॥ धीरधीरुदितानन्दः पेशलः पुण्यकीर्तनः । प्राज्ञः प्रसन्नमधुरो दैन्यादपगताशयः ॥ ३१ ॥ अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते । मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ३२ ॥ यतो वाचो निवर्तन्ते विकल्पकलनान्विताः । विकल्पसंक्षयाजन्तोः पदं तदवशिष्यते ॥ ३३ ॥ अनाद्यन्तावभासात्मा परमात्मैव विद्यते । इत्येतन्निश्चयं स्फारं सम्यग्ज्ञानं विदुर्बुधाः ॥ ३४ ॥ यथाभूतार्थदर्शित्वमेतावद्भुवनत्रये । यदात्मैव जगत्सर्वमिति निश्चित्य पूर्णता ॥ ३५ ॥ सर्वमात्मैव कौ दृष्टौ भावाभावौ क्व वा स्थितौ । क्व बन्धमोक्षकलने ब्रह्मैवेदं विजृम्भते ॥ ३६ ॥ सर्वमेकं परं व्योम को मोक्षः कस्य बन्धता । ब्रह्मेदं बृंहिताकारं बृहद्बृंहदवस्थितम् ॥ ३७ ॥ दूरादस्तमितद्वित्वं भवात्मैव त्वमात्मना । सम्यगालोकिते रूपे काष्ठपाषाणवाससाम्

स्फुटप्रकाशः। तदनु च समतावशात्स्वरूपे परिणमनं महतामचिन्त्यरूपम् ॥ ५४ ॥ अखिलमिदमनन्तमात्मतत्त्वं दृढपरिणामिनि चेतसि स्थितोऽन्तः। बहिरुपशमिते चराचरात्मा स्वयमनुभूयत एव देवदेवः ॥ ५५ ॥ असक्तं निर्मलं चित्तं युक्तं संसार्यविस्फुटम्। सक्तं तु दीर्घतपसा मुक्तमप्यतिबद्धवत् ॥ ५६ ॥ अन्तःसंसक्तिनिर्मुक्तो जीवो मधुरवृत्तिमान्। बहिः कुर्वन्नकुर्वन्वा कर्ता भोक्ता न हि क्वचित् ॥ ५७ ॥

इत्यन्नपूर्णोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥

निदाघ उवाच ॥ सङ्गः कीदृश इत्युक्तः कश्च बन्धाय देहिनाम्। कश्च मोक्षाय कथितः कथं त्वेष चिकित्स्यते ॥ १ ॥ देहदेहिविभागैकपरित्यागेन भावना। देहमात्रे हि विश्वासः सङ्गो बन्धाय कथ्यते ॥ २ ॥ सर्वमात्मेदमत्राहं किं वाञ्छामि त्यजामि किम्। इत्यसङ्गस्थितिं विद्धि जीवन्मुक्ततनुस्थिताम् ॥ ३ ॥ नाहमस्मि न चान्योऽस्ति न चायं न च नेतरः। सोऽसङ्ग इति संप्रोक्तो ब्रह्मास्मीत्येव सर्वदा ॥ ४ ॥ नाभिनन्दति नैष्कर्म्यं न कर्मस्वनुषज्जते। सुसमो यः परित्यागी सोऽसंसक्त इति स्मृतः ॥ ५ ॥ सर्वकर्मफलादीनां मनसैव न कर्मणा। निपुणो यः परित्यागी सोऽसंसक्त इति स्मृतः ॥ ६ ॥ असंकल्पेन सकलाश्चेष्टा नाना विजृम्भिताः। चिकित्सिता भवन्तीह श्रेयः संपादयन्ति हि ॥ ७ ॥ न सक्तमिह चेष्टासु न चिन्तासु न वस्तुषु। न गमागमचेष्टासु न कालकलनासु च ॥ ८ ॥ केवलं चिति विश्रम्य किंचिच्चैत्यावलम्ब्यपि। सर्वत्र नीरसमिह तिष्ठत्यात्मरसं मनः ॥ ९ ॥ व्यवहारमिदं सर्वं मा करोतु करोतु वा। अकुर्वन्वापि कुर्वन्वा जीवः स्वात्मरतिक्रियः ॥ १० ॥ अथवा तमपि त्यक्त्वा चैत्यांशं शान्तचिद्घनः। जीवस्तिष्ठति संशान्तो ज्वलन्मणिरिवात्मनि ॥ ११ ॥ चित्ते चैत्यदशाहीने या स्थितिः क्षीणचेतसाम्। सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥ १२ ॥ एषा निदाघ सौषुप्तस्थितिरभ्यासयोगतः। प्रौढा सती तुरीयेति कथिता तत्त्वकोविदैः ॥ १३ ॥ अस्यां तुरीयावस्थायां स्थितिं प्राप्याविनाशिनीम्। आनन्दैकान्तशीलत्वादनानन्दपदं गतः ॥ १४ ॥ अनानन्दमहानन्दकालातीतस्ततोऽपि हि। मुक्त इत्युच्यते योगी तुर्यातीतपदं गतः ॥ १५ ॥ परिगलितसमस्तजन्मपाशः सकलविलीनतमोमयाभिमानः। परमरसमयीं परात्मसत्तां जलगतसैन्धवखण्डवन्महात्मा

॥ १६ ॥ जडाजडदृशोर्मध्ये यत्तत्त्वं पारमार्थिकम् । अनुभूतिमयं तस्मात्सारं ब्रह्मेति कथ्यते ॥ १७ ॥ दृश्यसंवलितो बन्धस्तन्मुक्तौ मुक्तिरुच्यते । द्रष्टृदर्शनसंबन्धे याऽनुभूतिरनामया ॥१८॥ तामवष्टभ्य तिष्ठ त्वं सौषुप्तीं भजते स्थितिम् । सैव तुर्यत्वमाप्नोति तस्यां दृष्टिं स्थिरां कुरु ॥ १९ ॥ आत्मा स्थूलो न चैवाणुर्न प्रत्यक्षो न चेतरः । न चेतनो न च जडो न चैवासत्त सन्मयः ॥ २० ॥ नाहं नान्यो न चैवैको न चानेकोऽद्वयोऽव्ययः । यदीदं दृश्यतां प्राप्तं मनः सर्वेन्द्रियास्पदम् ॥ २१ ॥ दृश्यदर्शनसंबन्धे यत्सुखं पारमार्थिकम् । तदतीतं पदं यस्मात्तन्न किंचिदिवैव तत् ॥ २२ ॥ न मोक्षो नभसः पृष्ठे न पाताले न भूतले । सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥ २३ ॥ मोक्षो मेऽस्त्विति चिन्ताऽन्तर्जाता चेदुत्थितं मनः । मननोत्थे मनस्येष बन्धः सांसारिको दृढः ॥ २४ ॥ आत्मन्यतीते सर्वस्मात्सर्वरूपेऽथ वा तते । को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ २५ ॥ अध्यात्मरतिराशान्तः पूर्णपावनमानसः । प्राप्तानुत्तमविश्रान्तिर्न किंचिदिह वाञ्छति ॥ २६ ॥ सर्वाधिष्ठानसन्मात्रे निर्विकल्पे चिदात्मनि । यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ २७ ॥ नापेक्षते भविष्यच्च वर्तमाने न तिष्ठति । न संस्मरत्यतीतं च सर्वमेव करोति च ॥ २८ ॥ अनुबन्धपरे जन्तावसंसर्गमनाः सदा । भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ २९ ॥ बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् । युवा यौवनवृत्तेषु दुःखितेषु सुदुःखधीः ॥ ३० ॥ धीरधीरुदितानन्दः पेशलः पुण्यकीर्तनः । प्राज्ञः प्रसन्नमधुरो दैन्यादपगताशयः ॥ ३१ ॥ अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते । मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ३२ ॥ यतो वाचो निवर्तन्ते विकल्पकलनान्विताः । विकल्पसंक्षयाजन्तोः पदं तदवशिष्यते ॥ ३३ ॥ अनाद्यन्तावभासात्मा परमात्मैव विद्यते । इत्येतन्निश्चयं स्फारं सम्यग्ज्ञानं विदुर्बुधाः ॥ ३४ ॥ यथाभूतार्थदर्शित्वमेतावद्भुवनत्रये । यदात्मैव जगत्सर्वमिति निश्चित्य पूर्णता ॥ ३५ ॥ सर्वमात्मैव कौ दृष्टौ भावाभावौ क्व वा स्थितौ । क्व बन्धमोक्षकलने ब्रह्मैवेदं विजृम्भते ॥ ३६ ॥ सर्वमेकं परं व्योम को मोक्षः कस्य बन्धता । ब्रह्मेदं बृंहिताकारं बृहद्बृंहदवस्थितम् ॥ ३७ ॥ दूरादस्तमितद्वित्वं भवात्मैव त्वमात्मना । सम्यगालोकिते रूपे काष्ठपाषाणवाससाम्

॥ ३८ ॥ मनागपि न भेदोऽस्ति क्वासि संकल्पनोन्मुखः । आदावन्ते च संशान्तस्वरूपमविनाशि यत् ॥३९॥ वस्तूनामात्मनश्चैतत्तन्मयो भव सर्वदा । द्वैताद्वैतसमुद्भेदैर्जरामरणविभ्रमैः ॥ ४० ॥ स्फुरत्यात्मभिरात्मैव चित्तैरब्धीव वीचिभिः । आपत्करञ्जपरशुं पराया निर्वृतेः पदम् ॥ ४१ ॥ शुद्धमात्मानमालिङ्ग्य नित्यमन्तःस्थया धिया । यः स्थितस्तं क आत्मेह भोगो बाधयितुं क्षमः ॥ ४२ ॥ कृतस्फारविचारस्य मनोभोगादयोऽरयः । मनागपि न भिन्दन्ति शैलं मन्दानिला इव ॥ ४३ ॥ नानात्वमस्ति कलनासु न वस्तुतोऽन्तर्नानाविधासु सरसीपु जलादिवान्यत् । इत्येकनिश्चयमयः पुरुषो विमुक्त इत्युच्यते समवलोकितसम्यगर्थः ॥ ४४ ॥

इत्यन्नपूर्णोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

विदेहमुक्तेः किं रूपं तद्वान्को वा महामुनिः । कं योगं समुपस्थाय प्राप्तवान्परमं पदम् ॥ १ ॥ सुमेरोर्वसुधापीठे माण्डव्यो नाम वै मुनिः । कौण्डिन्यात्तत्त्वमास्थाय जीवन्मुक्तोऽभवत्पुरा ॥ २ ॥ जीवन्मुक्तिदशां प्राप्य कदाचिद्ब्रह्मवित्तमः । सर्वेन्द्रियाणि संहर्तुं मनश्चक्रे महामुनिः ॥ ३ ॥ बद्धपद्मासनस्तिष्ठन्नर्धोन्मीलितलोचनः । बाह्यानाभ्यन्तरांश्चैव स्पर्शान्परिहरञ्छनैः ॥ ४ ॥ ततः स्वमनसः स्थैर्यं मनसा विगतैनसा । अहो नु चञ्चलमिदं प्रत्याहृतमपि स्फुटम् ॥ ५ ॥ पटाद्धटमुपायाति घटाच्छकटमुत्कटम् । चित्तमर्थेषु चरति पादपेष्विव मर्कटः ॥ ६ ॥ पञ्च द्वाराणि मनसश्चक्षुरादीन्यमून्यलम् । बुद्धीन्द्रियाभिधानानि तान्येवालोकयाम्यहम् ॥ ७ ॥ हन्तेन्द्रियगणा यूयं त्यजताकुलतां शनैः । चिदात्मा भगवान्सर्वसाक्षित्वेन स्थितोऽस्म्यहम् ॥ ८ ॥ तेनात्मना बहुज्ञेन निर्ज्ञाताश्चक्षुरादयः । परिनिर्वामि शान्तोऽस्मि दिष्ट्यास्मि विगतज्वरः ॥ ९ ॥ स्वात्मन्येवावतिष्ठेऽहं तुर्यरूपपदेऽनिशम् । अन्तरेव शशामास्य क्रमेण प्राणसन्ततिः ॥ १० ॥ ज्वालाजालपरिस्पन्दो दग्धेन्धन इवानलः । उदितोऽस्तं गत इव ह्यस्तं गत इवोदितः ॥ ११ ॥ समः समरसाभासस्तिष्ठामि स्वच्छतां गतः । प्रबुद्धोऽपि सुषुप्तिस्थः सुषुप्तिस्थः प्रबुद्धवान् ॥ १२ ॥ तुर्यमालम्ब्य कायान्तस्तिष्ठामि स्तम्भितस्थितिः । सबाह्याभ्यन्तरान्भावान्स्थूलान्सूक्ष्मतरानपि ॥ १३ ॥ त्रैलोक्यसंभवांस्त्यक्त्वा संकल्पैकविनिर्मितान् । सह प्रणवपर्यन्तदीर्घनिःस्वनतन्तुना ॥ १४ ॥ जहाविन्द्रियतन्मात्राजालं खग इवानिलः । ततोऽङ्गसंविदं स्वच्छां प्रतिभासमुपागताम्

